 अधिकारः सारस्वतमिश्र

कुतः ? विहारस्य प्रभुत्वात् । प्रभवति हि परकीयोऽपि विहारः सर्वेषामुपकर्तुम् । कृतार्थो हि तेन सिध्यति । स यदीयेन तदीयेन वा सिद्धिमुपैति । तस्मादनग्नीनामपि भवितुमर्हति इति ।

सारस्वते च दर्शनात् । २८ ॥

भाष्यं— सारस्वते च सत्रे भवति दर्शनम् । 'परस्थैर्वा एते स्वर्गं लोकं यन्ति, येऽनाहिताग्नयः सत्रमासते' इति अनाहिताग्नीनां सत्र दर्शयति । तस्मादपि सर्वेषाम् ।

प्रायश्चित्तविधानाच्च । २९ ॥

भाष्यं— प्रायश्चित्तं विधीयते 'अग्नये विविचयेऽष्टाकपालं पुरोडाशं निर्वपेत्, यस्याहिताग्नेरन्यैरग्निभिरग्नयः संसृज्येरन्' इति एतदग्नीनां प्रायश्चित्तं दर्शयति । स (संसर्गः) एव स्यात् अनाहितैः, नान्यथा । तस्मादपि अनग्नीनां सत्राणीति ।

साग्नीनां वेष्टिपूर्वत्वात् । ३० ॥

भाष्यं— साग्नीनां वा सत्राणि नानग्नीनाम् । कस्मात् ? इष्टिपूर्वत्वात् । इष्टिपूर्वत्वं सोमानामाम्नातम् । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति ज्योतिष्टोमस्य इष्टिपूर्वत्वम् । तच्चोदकपरंपरया सत्राणि प्रति प्राप्तम् । तस्मात् नानग्नीनां तानि भवेयुरिति ।

स्वार्थेन च प्रयुक्तत्वात् । ३१ ॥

भाष्यं— स्वार्थेन च अग्नयः प्रयुक्ताः । कथं ? उपग्रहविशेषात् । उपग्रहविशेषो हि भवति 'अग्नीनादधीत' इति । तस्मात् अन्यस्याग्निभिः अन्यस्य न सिद्धिः, यद्यपि परार्था अग्नयः इति ।

संनिवापं च दर्शयति । ३२ ॥

भाष्यं— 'साग्निचित्यानि होष्यन्तः संनिवपेरन्' इति । तेनापि साग्नयः सत्राणि उपासते इति गम्यते ।

प्रायश्चित्तमापदि स्यात् । ३३ ॥

भाष्यं— एवं लिङ्गपरिहारानशिष्टेऽधिकरणे अन्यत् चिन्त्यते । ... अथेदानीं पूर्वोक्तस्य ( २९ सूत्रे ) लिङ्गस्य परिहार उच्यते । प्रायश्चित्तमस्मिन्पक्षेऽपि अवकल्पिष्यते । कथं ? अरण्ये कान्तारे गच्छता सिञ्चता वा दस्युभयात् आपदभयाद्वा ग्रामे ग्रामे, दावाग्निना वा संसृज्येरन् मिथो वा, स विषयः प्रायश्चित्तस्य भविष्यति इति ।

शा— 'तन्त्राग्नीनां परार्थत्वाद् यस्य कस्य चिदग्निषु । साधितं कर्म सर्वेषां फलं साधयति ध्रुवम् ॥' नैवम् । 'इष्टिपूर्वकता सोमविकाराणामवस्थिता । इष्टौ चानाहिताग्नीनां न कथं चिद्विधिक्रिया ॥ आधातुरग्नयः कार्यं नान्येषां साधयन्ति च । उपग्रहविशेषेण कर्तुरेव फलान्वयात् ॥'

सोम— पूर्वेणैव विशेषविचारात् संगतिः । वचनात् सारस्वतसत्रे अनग्नीनामधिकारेऽपि नान्यत्राधिकारः प्रमाणाभावात् । सूत्रार्थस्तु— विहारस्याग्नीनां अन्यदीयानामपि अन्योपकारे प्रभुत्वादनाहिताग्नीनामपि सत्र स्यादिति ।

वि— 'अनाधातुश्च तत् किंवाऽऽधातुर्वा, भिन्नो यतः । एकस्याग्निषु तत्सिद्धिः, न स्वामिभ्यात्मनेपदात् ॥'

भाट्ट— सारस्वतसत्रे 'परस्थैर्वा एते स्वर्गं लोकं यन्ति, येऽनाहिताग्नयः सत्रमासते' इति विधौ सत्रग्रहणस्य प्रकरणेन संकोचे प्रमाणाभावात् सर्वसत्रेषु अनाहिताग्नीनामपि आहिताग्निसहितानां अधिकारः इति मन्यते । अत एव सारस्वतसत्रस्यैव इतरसर्वसत्रव्यतिरिक्तविषयत्वेन आधानगतात्मनेपदम् । इष्टिसोमोत्तरकालता तु प्रत्यक्षत्वात् एकस्य चित् तादृश इष्टिसोमकर्तारं अपेक्ष्यैव । नहि तत्र इष्टिसोमसमानकर्तृकत्वमपि विधीयते, वाक्यभेदप्रसङ्गात् । इति प्राप्ते, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत, य एतेनानिष्ट्वा उत्तरेण यजेत गर्तपत्यमेव तद् भवति' इति वाक्येभ्यः अतिदेशात् एकवाक्यत्वोपादानेन वाक्यभेदाभावात् इष्टिसोमसमानकर्तृकत्वावगतेः । तत्र च आधानगतात्मनेपदानुरोधेन आहिताग्निमात्रकर्तृकत्वावगतेः, सारस्वतसत्रप्रकरणस्थविधिवाक्ये च जीवाद्विवत् तत्रैव अनाहिताग्नेः अभ्यनुज्ञानात् आत्मनेपदानुरोधेन इतरसत्रेषु आहिताग्नीनामेव अधिकारः ।

न्यायबिन्दुः— अनाहिताग्नेरपि, कस्य चिदग्निभिः कार्यसिद्धेः तेन सह सत्रेऽधिक्रियते । इति प्राप्ते, सोमविकाराणां इष्टिपूर्वकत्वात् अनाहिताग्नेश्च इष्ट्यभावात् नाधिकारः । 'आदधीत' इत्यात्मनेपदात् आधातुरेवाग्नयः कर्मसाधनं, अतोऽपि नानग्नीनामधिकारः इति सिद्धान्तः ।

मण्डन— 'स्मार्ताश्च धर्मा उपनीतकार्याः ।'
शंकर— 'नियमा उपनीत्यूर्ध्वम् ।'

* अधिकारः (स्वरूपलक्षणम्) पुरुषस्य ऐश्वर्यं कर्मणि (अयं अनुष्ठाने प्रवृत्तेरुपयुक्तः)। ऋजु. पृ १४. * अधिकारः फलभोक्तृतया स्वामित्वम् (इत आरभ्य अधिकारः षष्ठाध्यायविषय एव)। वि. ६।१।१. * अधिकारः साकाङ्क्षबुद्धिविपरिवृत्तिः (अयं अनुवृत्तिरूपः प्रकरणात्मकः)। कौ. ३।३।५।२२ पृ ३३७.

* (क निरूपितः) अधिकारः कर्तृसमीहितसाधनात्मिकायाः कर्तव्यतायाः निर्धेरतः इति षष्ठे निरूप्यते। कणिका. पृ. ४३०. * अधिकारः कर्मस्वरूपे अवधारिते तद्योग्यतया शक्यो निरूपयितुं इति पश्चात् लक्षणानि (अध्यायान्) प्रतीक्षते (षष्ठाध्यायार्थः)। वा. २।१।१।१ पृ. ३७२, * अधिकारः यथोपदिष्टकर्मानुष्ठानसामर्थ्येन कर्तुरपेक्ष्यते इति क्रमनियमपर्यन्तोपदेशज्ञानोत्तरकाल आरभ्यते। ३।१।१।१ पृ. ६५१. * अधिकारः षष्ठाध्यायार्थः। के.

(कस्य क) अधिकारः अनाहिताग्नेरेव चतुर्होतृहोमेषु। भा. ६।८।१।१–१०, * आहिताग्नीनामेव सारस्वतभिक्षसत्रेषु। ६।६।५।२७–३२, ३५, * उपनीतस्यैव स्मार्तादिकर्मसु। ६।२।६।२१–२२, * एकस्यैव पुंसः क्रीतद्वितीयस्य दर्शपूर्णमासादौ। ६।७।२।३–१२, * एकस्यैव पुरुषस्य क्रीतद्वितीयस्य, न तु द्वयोः पुरुषयोः, आधाने। ६।१।५।२२–२३. * अधिकारः तत्तत्क्रतुप्रतिपादकस्वाध्यायाध्ययनवत एव तत्तत्क्रतौ इति वार्तिककाराः। तथाहि 'यद्यपि स्वाध्यायग्रहणेन सकलो वेदः परिगृहीतः, तथापि दर्शपूर्णमासौ कुर्वाणस्य ज्योतिष्टोमविषयमन्त्रब्राह्मण न कश्चिदुपयुज्यते इति असदपि नाधिकारं व्यावर्तयति इष्टिनेदेनैव योग्यतायाः सिद्धत्वात्। तेन यथाक्रिनः तावतैव स्वाध्यायः।' वा. ३।८।८।३८. * आर्षेयस्यैव दर्शपूर्णमासयोः। 'त्रीणि आर्षेयाणि यः समादर्शितुं शक्नोति सोऽधिक्रियते।' टुप्. ६।१।१३।४३. * दम्पत्योः सह, धर्मेषु। भा. ६।१।४।१७–२१, * द्रव्यरहितस्यापि कर्मसु। ६।१।८।३९–४०, * निषादस्थपतेः अध्ययनविधिसिद्धज्ञानविरहितोऽपि 'एतया निषादस्थपतिं याजयेत्' इति वचनात् निषादेष्ट्याम्। निषादस्थपतिशब्दे हि निषादश्चासौ स्थपतिश्चेति कर्मधारयः, न तु निषादानां स्थपतिः इति षष्ठीतत्पुरुषः, षष्ठ्यर्थे लक्षणाऽऽपत्तेः। एतावांस्तु विशेषः, निषादस्य अध्ययनविधिसिद्धज्ञानाभावेन एतस्यैव विधेः तत्कर्मोपयिकज्ञानाक्षेपकत्वम्। मीन्या. २३९–४०. * निषादस्थपतेः रौद्रे चरौ। भा. ६।१।१३।५१–५२, * पुंस एव उपस्थानादिषु, स्त्रियास्तु यावदुक्तं आशीर्ब्रह्मचर्यम्। ६।१।६।२४, * प्रकृष्टधियामेव न मन्दधियां, स्वर्गनिःश्रेयसापवर्गहेतुकानुष्ठेयत्वागतिपूर्वकस्यैवानुष्ठानस्य वैदिकेषु कर्मसु अधिकारशब्देन विवक्षितत्वात्। सु. पृ. १३८१. * प्रतिसमाधेयाङ्गवैकल्यस्यापि कर्मसु। भा. ६।३।१।८१, * प्रत्येकं कृत्स्नफलभोक्तृणां सत्रे। ६।२।१।१–२, * फलकामस्यैव तत्तत्फलसाधनेषु कर्मसु। ६।१।१।१–३, * ब्राह्मणस्यैव आर्त्विज्ये। १२।४।१५।४३–४७, * ब्राह्मणानामेव सत्रे। ६।६।३।१६–२३, * भिन्नकल्पयोरपि कुल्यायज्ञे। ६।६।२।१२–१५, * मनुष्याणामेव विश्वसृजामयने, संवत्सरशब्दस्य दिवसपरत्वात्। ६।७।१३।३१–४०, * यथाशक्त्यङ्गानुष्ठातुरपि नित्ये कर्मणि। ६।३।१।१–७, * रथकारस्य सौधन्वनापरपर्यायस्य आधाने। ६।१।१२।४४–५०, यद्यपि च 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेन रथकारस्य सौधन्वनापरपर्यायस्य आधानं विहितं योगात् रूढेर्बलीयस्त्वात्, तथापि नास्य उत्तरकर्मसु अधिकारः, अध्ययनविधिसिद्धज्ञानाभावात्। न च तदभावे आधानेऽपि कथमधिकार इति वाच्यम्। तस्य अध्ययनविधिसिद्धज्ञानाभावेऽपि 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेनैव विधिना आधानमात्रोपयिकज्ञानापेक्षणात्, अन्यथा एतस्यैव विधेरनुपपत्तेः। अतश्च रथकारस्य आधानमात्रे अधिकारेऽपि नोत्तरकर्मसु अधिकारो नित्याऽभावात्। एवं च तदाधानं नाग्निसंस्कारार्थं संस्कृतानामग्नीनां उत्तरत्रोपयोगाभावात्, किन्तु तदाधानं लौकिकाग्निगुणक विश्वजिन्न्यायेन स्वर्गार्थं च स्वतन्त्रमेव प्रधानकर्म विधीयते। अग्नीन् इति च द्वितीया

भिद्यते तस्यापि विश्वजिति अधिकारः, उत यस्य सकलं अधिकं वा तस्यैवेति । किं प्राप्त ? विकारः सन्नुभयतोऽविशेषात् । न विशेषः कश्चिदाश्रीयते । यस्य द्वादशशतं अधिकमूनं वा अस्तीति । तस्मात् सर्वस्य विश्वजिति अधिकार इति ।

अधिकं वा, प्रतिप्रसवात् । १९ ॥

भाष्यं— न नैतदस्ति सर्वस्य विश्वजिति अधिकार इति । कस्य तर्हि ? यस्य द्वादशशतमस्ति अधिकं चेति । कुतः ? प्रतिप्रसवात् । प्रतिप्रसवो हि ज्योतिष्टोमे सर्वस्वस्य उच्यते । द्वादशशतं विधाय आह 'एतावता यदि ऋत्विज आनेया अपि वा सर्वस्वेन' इति । यदि एतावता नेच्छेयुः सर्वस्वेनापि आनमयितव्या इति । तद्यदि द्वादशेन शतेन नेच्छन्ति नेच्छन्तितरां ततो न्यूनेन । तस्मात् द्वादशशतं ज्योतिष्टोमे, यद्वा सर्वस्वम् । तदिह उभयमपि प्राप्तम् । तत्र एकः पक्षो नियम्यते, सर्वस्वं देयमिति । स एव न विधिः, प्राप्तत्वात् । अनियतप्राप्तस्तु नियम्यते । स चेन्नियम्यते यादृशस्तत्र, तादृश एवेह । तत्र च द्वादशशतं अधिकं वा सर्वस्वं, इहापि तद्देव । तस्मान्न न्यूनधनस्य अधिकार इति ।

अनुग्रहाच्च पादवत् । २० ॥

भाष्यं— चशब्देन अन्वाचयः । इतश्च अधिकं सर्वस्वम् । अधिके हि दीयमाने तदन्तर्गतत्वात् द्वादशशतमपि दत्तं भवति । पादवत् । यथा कार्षापणे दीयमाने पादोऽपि दत्तो भवति, एवमिहापीति ।

शा— 'तत्र न्यूनेऽधिके वाऽपि सर्वशब्दोपपत्तितः । उभयोरधिकारः स्यान्न न्यूनाधिकदायिनोः ॥ इदं तु प्रकृतेः प्राप्त सर्वदानं नियम्यते । तत्र चानतिशिष्टदर्शमधिकं सर्वमीरितम् ॥'

सोम— यथा सर्वविश्वजितामविशेषः, एवं सर्वस्वदाने सर्वपुरुषाणामविशेष इति प्रत्यवस्थानात् संगतिः ।

सूत्रार्थस्तु— सर्वस्वधर्मः प्रकृतिविकारः सन् उभयतो न्यूनेऽधिके च स्यादविशेषादिति ।

वि— 'न्यूनेऽप्युत शतात् किं स्यात् सर्वंवाऽधिक एव वा ।, मुख्यत्वादविमो, ऽन्त्यः स्याद्दानयै सर्वदर्शनात् ॥'

भाट्ट— प्रकृतिभूते विश्वजिति द्वादशशतादिन्यूनधनस्यापि सर्वस्वपदवाच्यत्वोपपत्तेः तद्वतोऽप्यधिकारः । इति प्राप्ते, प्रकृतौ ज्योतिष्टोमे 'यदि एतावता ऋत्विजो नानमेयुः अपि सर्वस्वेन' इत्यनेन द्वादशशतधाभ्यायामानतो सर्वस्वविधानात् तत्र च तदधिकस्यैव योग्यतया प्राप्तेः, तादृशस्यैवात्र पक्षप्राप्तस्य नियममात्रकरणात् द्वादशशताधिकधनस्य एव विश्वजिति अधिकारः ।

न्यायबिन्दुः— सर्वस्वं द्वादशशतादूनमपि देयम् । इति प्राप्ते, प्रकृतौ पक्षे विहितस्य सर्वस्य इह नियममात्रविधानात्, तत्र च 'यद्येतावता न नमेयुरपि सर्वस्वेन' इति द्वादशशतादधिकस्यैवोक्तेः, तद्दानमेवेति सिद्धान्तः ।

मण्डन— 'तद् द्वादशशतादूर्ध्वम् ।' तत् सर्वस्वम् ।

शंकर— 'सर्वस्व प्राकृताधिकम् ।' ११.

सू अधिवपनकालेऽपि समन्त्रक एव विभागः ॥

चरुपुरोडाशाः । यत्र चर्वर्थं पुरोडाशार्थं च व्रीहिनिर्वापादितण्डुलीकरणान्तक्रिया कृता, तत्र तेषां तण्डुलानामधिवपनस्यारम्भात्तस्मिन्नेव काले विभागः प्रसक्तः । स चामन्त्रक एव कार्यः, प्राकृतत्वात् भिन्नमन्त्रत्वेन मन्त्राप्रवृत्तेः । सान्नाय्यप्रयोगेऽपि कुम्भीतो दारुपात्रेषु दोहाना ग्रहणस्यावदानधर्मेणामन्त्रकत्वादेव प्रवृत्त्यभावात् । इति प्राप्ते, अवदानादिप्रदानान्तैकपदार्थप्रथमावयवरूपहविर्ग्रहणस्याभिक्रमणादितः पूर्वकालिकस्य कुम्भीभिरेव कृतत्वात्, दारुपात्राणां होमकरणत्वनिर्वाहकस्य ग्रहणान्तरस्याप्राकृतत्वेन चतुरवदानरूपत्वाभावात्, तत्तदवयवोरादाय कारणादेव प्रवृत्तानि हविर्विभागस्य सामर्थ्यरसेन प्रागेव करणेऽपि प्राकृतत्वाभावात् तदङ्गमन्त्राणां च प्रधानानुसारित्वान्तरभावात्, अनुभयाज्ञानामन्यत्वात्त्वेऽपि तन्मन्त्राणामपि प्रवृत्तिः । संकर्ष. १।३।२१.

● अधिवापः दर्शपूर्णमासयोः । 'अधि च वपते' । आ. ३।८।५।११. अत्र सत्याषाढः— 'दृषदि तण्डुलानधिवपति १।५।८२ । निरुप्य, तूष्णीं चतुर्धा ८३ । सिनष्टि ८४ ।' पेषणार्थं दृषदि तण्डुलस्थापनं अधिवापः । चे. ● अधिवापमन्त्रे 'धान्यमसि धिनुहि देवान्'

कारीरीवाक्याध्ययनादौ। वि. २।४।२, * **अध्ययननियमाजन्यस्यापूर्वस्य** अशेषक्रतुजन्यमपूर्वं कल्पकम्। १।२।१. * **अध्ययनप्रकरणपठितस्यापि** अध्यायानध्यायादिधर्मजातस्य स्वरूपे कार्ये च अनुपयोगात् अध्ययनेनैव फलवत्कर्मावबोधं भावयेत् इति अध्ययननियमस्य अनारभ्यविहितस्यापि अध्ययनजनितज्ञानोपस्थापितशेषकर्माङ्गतया सामर्थ्योपबृंहितेन संनिधिना अवधारणात् तद्‌द्वारा कर्माङ्गत्वावगतेः अमावास्यादौ कर्माङ्गभूतयाज्यानुवाक्यादिमन्त्रोच्चारणं न कार्यं इति 'मन्त्राणां कर्मसंयोगे स्वधर्मेण प्रयोगः स्यात् धर्मस्य तन्निमित्तत्वात्' (१२।३।७।१८) इति सूत्रेण पूर्वपक्षयित्वा प्रकरणेन अध्ययनाङ्गतया अवधारितस्य अन्यार्थत्वे प्रमाणाभावात् अविज्ञपरिसमाप्त्यर्थत्वेन तदुपयोगसंभवात् कर्माङ्गत्वाभावेन कर्मकाले अध्यायानध्यायादिधर्मानादरेण अमावास्यादावपि कर्माङ्गमन्त्रोच्चारणं कार्यं इति 'विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य' (१९) इति सूत्रेण सिद्धान्तयिष्यते। सु. पृ. ५२. * न च तस्य (वेदस्य) **अध्ययनमात्रात्** तत्रभवन्तो याज्ञिकाः फलं समामनन्ति। यदपि समामनन्तीव तत्रापि 'द्रव्यसंस्कारकर्मसु' (४।३।१।१) इत्यर्थवादता वक्ष्यति। भा. १।१।१।१ पृ. ६. * **अध्ययनविधिः** अपूर्वविधिः दृष्टार्थश्च। बाल. पृ. २२. * **अध्ययनविधिः** एव सर्वस्य पुरुषार्थपर्यवसायित्वे प्रमाणं इति स्वमतेन वार्तिककारः प्रतिपादयति। सु. पृ. २१. वार्तिकं चेत्थम्। "सकलस्य तावत् वेदस्य 'स्वाध्यायोऽध्येतव्यः' इति अध्ययनभावना विधीयते। तत्र किं भावयेत् इत्यपेक्षायां अध्ययन इत्यागतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेन अपुरुषार्थसाध्याया भावनायाः प्रवर्तनाशक्तिप्रसक्तेः तद्वशात् निराक्रियते। ततश्च अध्ययनेन इत्यविरोधात् संनिधेश्च करणादौ निविशते। 'तेन किं' इत्यपेक्षिते 'यत् शक्यते' इत्युपक्रमात् अक्षरग्रहणं इत्यापतति। तस्यापि अपुरुषार्थत्वात् 'तेन किं' इति पदावधारणं इत्युपतिष्ठते। तेनापि पदार्थज्ञानं, तेन वाक्यार्थज्ञानं, तेन च अनुष्ठानं, अनुष्ठानेन स्वर्गादिफलप्राप्तिः इत्येतावति भावे निराकाङ्क्षीभवति।" इति। वा. १।१।१।७ पृ. ११३.

* **अध्ययनविधिः** कर्तृसापेक्षः कार्यापेक्षात् उपनीतानेव कर्तॄन् गृह्णाति इति अध्ययनविधिप्रयुक्ताध्ययनजन्यार्थज्ञानं त्रैवर्णिकानामेव सिध्यति। मणि. पृ. ४. * **अध्ययनविधिः** त्रैवर्णिकानामेव न शूद्रस्य। वि. ६।१।७. * **अध्ययनविधिः** प्रतिग्रहादिनियमवत् अध्ययननियमार्थः। तस्य निषेधेषु अध्ययनेनैव निषेधार्थमजानन् प्रवर्तेयात् इति कल्पनात् साफल्यम्। इति पितृचरणाः। मणि. पृ. ३. * **अध्ययनविधिः** स्वर्गार्थः विश्वजिन्न्यायेन इति जिज्ञासाधिकरणे पूर्वपक्षः। दृष्टे संभवति अदृष्टकल्पनाऽनवकाशात् फलवदर्थावबोधरूपदृष्टार्थः इति सिद्धान्तः। बाल. पृ. २. * **अध्ययनविधिः** 'स्वाध्यायोऽध्येतव्यः' इति अक्षरग्रहणमात्रपर्यवसायी इति के चिन्मन्यन्ते। अर्थज्ञानरूपदृष्टप्रयोजनाय वेदाध्ययनं विधीयते। अर्थज्ञानं च विचारमन्तरेण न संभवति। ततो विधिः विचारशास्त्रस्य प्रयोजकः इति सिद्धान्तः। वि. १।१।१. * **अध्ययनविधिना** अध्ययनेनैव वेदोपादाननियम उक्तः। सु. पृ. ६९०. * **अध्ययनविधेः** प्रयोजनवदर्थावबोधनं दृष्टं प्रयोजनम्। अक्षरग्रहणार्थत्वे तु अदृष्टार्थता स्यात्। कणिका. पृ. २७१. * **अध्ययनविधेः** फलं अर्थज्ञानपर्यन्तं गुरुकुलवासः विचारकरणं च। मणि. पृ. ४. * योऽयं अग्निहोत्रादिषु अधीतवेदानां त्रैवर्णिकानामेव अधिकारः न अनधीतवेदानां शूद्राणां इति अधिकारनियमः, स प्रयोजनं **अध्ययनविधेः**। शा. पृ. ६. * **अध्ययनविधौ** स्वाध्याय इति द्वितीयया गुणकर्मैव लक्ष्यते अन्यथा स्वाध्याये वाजपेयवाक्ये इव यागे गुणविधौ वैरूप्यापत्तेः इति माधवदेवः। तस्य 'श्रूयमाणस्य वाक्यस्य न्यूनाधिक्यविकल्पने। लक्षणावाक्यभेदादिदोषो नानुमिते त्वसौ॥' इति वार्तिकोक्तन्यायेन परिहारात्। बाल. पृ. २.

* **अध्ययनविधिप्रयुक्तमध्ययनं नाध्यापनविधिप्रयुक्तम्**॥ आचार्यकरणविधिप्रयुक्तस्य हि स्वाध्यायाध्ययनस्य प्रयोजनापेक्षायां पुरुषान्तरगामित्वेन बहिरङ्गमपि प्रथमावगतत्वेन तत्सिद्धिरेवास्य प्रयोजनं युक्तं, न त्वर्थज्ञानं पश्चाद्भावित्वात्। तेन अन्यार्थत्वाद्वेदाध्ययनस्य अविरक्षितोऽर्थः। अविवक्षितश्च न निर्णेतव्यः, प्रयोजनाभावात्।

विधिरेव विचारस्यापि प्रयोजकः, स हि निशिष्टप्रयोजनाध्ययनगोचरमध्यापन विदधत् तत्सिद्ध्यर्थं तादृशमध्ययन प्रयुङ्क्ते, तादृशत्व चाध्ययनस्य विचारमन्तरेणानुपपन्नमिति तेनैवासौ आक्षिप्यते इति ।

तदयुक्त विशिष्टस्य यत्राध्ययनस्य सः ।
अनुष्ठानं प्रयुङ्क्ते न ज्ञानस्यानङ्गभावतः ।२१॥

यद्यपि उपनयनद्वारेणाध्ययन प्रयुञ्जानोऽध्यापनविधिः उपनयनप्रक्रमाधीतस्वाध्यायोऽध्येत यइत्येतद्वाक्यविहित यदर्थज्ञानार्थमध्ययन, तस्यैवानुष्ठानं प्रयुङ्क्ते, तथापि तत्स्वरूपमात्रमेवोपकारकत्वात् प्रयुङ्क्ते, न त्वर्थज्ञानानुष्ठानं अनुपकारकत्वात् । यदि तु अर्थज्ञानमध्ययनाङ्गं भवेत्ततोऽध्ययनप्रयोजकेन विधिना तद्द्वारेण प्रयुज्येत ज्योतिष्टोमविधिनेव दीक्षणीयाद्वारेण वाङ्नियम. । न तज्ज्ञानमध्ययनाङ्गं, अध्ययनमेव तु तदङ्गं, न चाङ्गद्वारेण प्रधानं प्रयोक्तुं शक्यम् । यच्च ज्ञानं न प्रयुङ्क्ते, नासौ तत्सिद्ध्यर्थं विचार प्रयोक्तुमर्हति । ननु यद्यपि न ज्ञानमङ्ग विचारस्त्वङ्गमेव, सत्य, न त्वध्ययनाङ्गस्यापि तद्द्वारेणाध्यापनेन प्रयुक्तिसंभवः ।

यदि तेन विना न स्यात्प्रधानस्यात्मसंभव. ।
प्रयोजकस्य चासिद्धिस्तनस्तेन प्रयुज्यते ।२२॥
अन्यथाऽपि तु तल्लाभे स्यात्मलाभे च सिध्यति ।
नैव कार्यान्तराङ्गस्य प्रयुक्तिस्तेन सिध्यति ।२३॥

अध्यापन ह्यध्ययनमन्तरेणानुपपद्यमान तत्स्वरूपमात्रमेव तावत् साक्षात्प्रयुङ्क्ते, न तु तदङ्गम् । यदि त्वङ्गेन विना प्रधानभूतमध्ययनमेव न संभवेत्, ततस्तद्द्वारेणाङ्गमपि प्रयुञ्जीत पशुपूर्वमिव यूपद्वारेण छेदनादीन् । यदि नाङ्गशून्येनाध्ययनेनाध्यापन न सिध्येत् यत्किंचित्स्वाङ्गोपेतमेवाध्ययनमध्यापनोपकारि स्यात्, ततोऽध्यापनविधिनेवाध्ययनाङ्ग प्रयुज्येत ज्योतिष्टोमेनेव वाङ्नियम. । न त्वेतदुभयमप्यस्ति, विनाऽप्यङ्गेनाध्ययनस्वरूपसिद्धेः, अध्यापनस्य तत्स्वरूपमात्रेणाप्युपकारात् । तेन यद्यप्यविप्रकरिसमाप्त्युपयोगितया अध्ययनस्वरूपोपयोगिना व्रतादीना सकलवेदाध्यापननिर्णयेणाचार्यकविधिना अविघ्नपरिसमाप्त्याकाङ्क्षिणा प्रयुक्तिसंभवः, तथापि न विचारस्तेनाक्षिप्यते, कार्यान्तराङ्गत्वात् । अर्थज्ञानाख्य हि कार्यान्तर साधयतोऽध्ययनस्य विचारोऽङ्ग, नाध्यापनोपकारिणः । तेन नासावध्यापनविधिना प्रयुज्यते, किंतु अध्ययनजन्येनैवाधिकारेण । ततश्च—

तद्वदध्ययनस्यापि तत एव प्रयुक्तितः ।
नाध्यापनविधानेन प्रयुक्तिरुपपद्यते ॥ २४ ॥
अथ मन्यसे सत्यमध्ययनेऽस्येऽधिकारः किंतु—
अधीयानेन बालत्वात्तदा त्वेष न गम्यते ।
न चाविज्ञायमानेन प्रयुक्तिरुपपद्यते ।२५॥
समाप्ताध्ययनेनासौ व्युत्पन्नेनावगम्यते ।
ज्ञातेन च तदा तेन विचारोऽपि प्रयुज्यते ।२६॥

ज्ञायमानो ह्यधिकारः प्रयोजको भवति, न चाध्ययनावस्थायां बालेन माणवकेन अवगन्तु शक्यते । अतो नाध्ययनं स्वाधिकारप्रयुक्त, विद्वदधिकाराध्यापनवशेनैवानुष्ठितेऽध्ययने साङ्गे व्युत्पन्नेन माणवकेन वेदार्थावगमात् । अध्ययने त्वात्मनो नासौ अवगन्तु शक्यते, वेदार्थावगमपश्चादध्ययने स्वाधिकारोऽवगम्यते, अवगतेन च तेन विचारः प्रयुज्यते इति, तदयुक्तम् ।

हितकारिभिरेवासौ ज्ञायमानः प्रवर्तकः ।
कर्त्राऽविज्ञायमानोऽपि नैव स्यादप्रयोजकः ।
२७ ॥

यथैवातुरार्थं भिषग्भिर्हितकारिभिरौषधसेवाफलवेदिभिः आतुरापेक्षितफलान्तरप्रतिपादनेन तत्फलप्रदर्शनेन वा साम्ना वा उपायेनानुष्ठाप्यमानस्यौषधस्य स्वाधिकार एव प्रयोजकः तदभिसंधिप्रवृत्तत्वात् । औषधफलमेव ह्यारोग्यमभिसंधाय भिषजस्तत्तमनुष्ठापयन्ति, तथा अनाप्याध्ययनसाध्यमधिकारमनवगच्छद्भिर्हितकारिभि. पित्रादिभिरनुष्ठाप्यमानस्याध्ययनस्य तत्प्रयुक्तिता उपपद्यते । यदि चास्यानुष्ठानेन प्रयोजको ज्ञातश्च, ततोऽध्यापनविधिरपि बालेन वेनाज्ञायमान. प्रयोजको न स्यात् । अतो यथा तस्य ग्राहकागतस्य प्रयोजकत्व, एवमध्ययनसाध्यस्यापि अधिकारस्य भविष्यति, इति नाध्यापनविधिप्रयुक्तमध्ययनम् । यदि च तत्प्रयुक्त स्यात्ततो नार्थज्ञानार्थता सिध्येत् । नहि प्रतिलब्धानुष्ठानस्य प्रयोजनापेक्षा समस्ति, यदन्तरङ्गत्वादर्थज्ञानस्य प्रयोजनत्व स्यात् । ननु अधिकारपर्यवसायिनः सर्वे विधय इति अध्ययन-

यथैव 'एतयाऽन्नाद्यकामं याजयेत्' इति याजयतेः परः श्रूयमाणोऽपि विधिः यागविधिपर एव प्रयोजकव्यापारपरः शब्दो द्रव्यार्जनार्थप्राप्तऋत्विग्व्यापारानुवाद इति स्थास्यति, तथा 'अध्यापयेत्' इत्यध्ययनविधिपर एव, नाध्यापनविधिपरः, द्रव्यार्जनोपायत्वेनैव प्राप्तत्वात्। उपनयनमप्यध्ययनाङ्गमेव अध्येतृसंस्कारत्वात्। एतेनैव 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इति वचनं व्याख्यातम्। ननु तयोरनयनस्यात्मनेपदश्रवणात् आचार्यकार्यत्वमवगम्यते। न, अकर्त्रभिप्रायत्वान्नयतेरात्मनेपदविधानस्य। अन्यथा 'स्वरितञितः' इत्यनेनैवाचार्यकसाधनेऽप्यर्थे वर्तमानान्नयतेरात्मनेपदं सिध्यतीति संमाननेतिसूत्रमनर्थकं स्यात्। तथा चाहुः 'अनर्थकाभिप्रायार्थः पुनरारम्भः' इति। तस्मादध्येतृसंस्कारद्वारेणाध्ययनाङ्गमेवोपनयनं अनुष्ठानात् – चाजिनमिवाग्निशार्थमध्यापनं आचार्यकं साधयति, न तु तदर्थम्। तस्मादाचार्यकार्यतया अध्यापनस्य विधायकं वचनमस्ति। किंच, न चालौकिकमाचार्यकं, उपनीय वेदाध्यापयितुराचार्यशब्दो वाचकः पाठकादिवत्। उपनीय तु यः शिष्यमित्यपि शब्दार्थप्रतिपादनपरमेव। तेनाविद्यमानत्वादध्यापनविधेर्न तत्प्रयुक्तमध्ययनम्। अथापि 'विद्यादानेन सुमतिर्ब्रह्मलोके महीयते' इत्यादिभिर्विद्यादानात्मकत्वादध्यापनमपि फलान्तरशेषतया विहितं भवेत्, तथापि तत्र सर्वत्र निषेध्याश्रवणादधिकारमात्रस्य चाध्ययनेऽपि सद्भावात्, निचारस्यानैयत्यप्रसङ्गान्नाध्यापनविधिप्रयुक्तमध्ययनम्।

कश्चित् पुनराह, यद्यप्यध्ययनस्य स्वाधिकारेण प्रवृत्तिः संभवति, तथापि नाध्यापनविधिरपि युज्यते। तथाहि,

ज्ञानं नाध्ययनस्य स्यात् स्वमहिम्ना प्रयोजकम्।
तत्साध्यमग्निहोत्रादि तद्द्वारेण प्रयोजकम्॥२९॥

न ह्यर्थज्ञानं स्वयमपुरुषार्थत्वादध्ययनस्य प्रयोजकं भवितुमर्हति। ज्ञानसाध्यानि तु अग्निहोत्राद्यपूर्वाणि तद्द्वारेण प्रयोजकानि भवन्ति, न तु तेषां ज्ञानमङ्गं किंतूपकारकमात्रम्। आचार्यकस्य तु अध्यापनमङ्गमेव अतस्तत् स्वाङ्गद्वारेणापि प्रयोजकत्वं लभते, अग्निहोत्राद्यपूर्वाणि तूपकारकद्वारेण। न चाभिक्षावदङ्गद्वारेणापि प्रयोजकत्वलाभे सति उपकारकद्वारेण वाजिनवत् प्रयोजकत्वं युक्तमङ्गीकर्तुं, तस्मादध्यापनविधिप्रयुक्तमध्ययनमिति। तदयुक्तम्। यद्यपि हि,

न ज्ञानं कर्मणामङ्गं ज्ञानस्याध्ययनं मतम्।
अङ्गं नाध्यापनस्यैतच्च तेनातः प्रयुज्यते॥३०॥

यद्यपि न कर्माङ्गं ज्ञानं, अध्ययनं तु ज्ञानाङ्गमेव, तेन प्रयुज्यमानमध्ययनं शेषिप्रयुक्तमेव भवति, न त्वध्ययनमङ्गं, अतस्तेन प्रयुक्तमध्ययनं उपकार्यमात्रप्रयुक्तं स्यात्, न शेषिप्रयुक्तम्। तेन शेषिप्रयुक्तत्वे संभवति उपकार्यमात्रप्रयुक्तत्वमयुक्तमिति सुतरां स्वाधिकारप्रयुक्तमध्ययनं नाध्यापनप्रयुक्तम्। यद्यपि ज्ञानं स्वरूपेणापुरुषार्थः, तथापि कर्मानुष्ठानौपयिकत्वात् पुरुषैरर्थ्यत एवेति पुरुषार्थत्वादध्ययनस्य प्रयोजकत्वं संभवत्याचार्यकवत्। तदपि हि स्वरूपेणानभिलषितं दक्षिणालाभसिद्ध्यर्थमेव पुरुषेणार्थ्यते। अतो यथा तस्य प्रयोजकत्वं, एवं ज्ञानस्यापि। न ह्यस्य स्वरूपेणार्थितं प्रयोजकमिति नियमः समस्ति, सुखसाधनपशुपुत्रादिवत् फलान्तरसाधनतया अर्थितस्य प्रयोजकत्वाविरोधात्। यद्यपि चाग्निहोत्राद्यपूर्वमेव ज्ञानद्वारेण प्रयोजकं, तथापि तदेव युक्तं नाध्यापनं, पुरुषान्तरगामित्वात्। अध्येतृगाम्येव तु ज्ञानं वा तत्साध्यं वा अग्निहोत्रादि प्रयोजकमध्ययनस्य युक्तम्। योऽपि अङ्गद्वारेणाध्यापनविधेः प्रयोजकत्वमुपकारकद्वारेणाग्निहोत्रादीनामिति विशेषोऽभिहितः सोऽपि नास्ति। द्वयोरप्यङ्गत्वमुपकारकत्वं च द्वारमेव। तथाहि। अग्निहोत्राद्युपकारकत्वात् ज्ञानं तदङ्गत्वाच्चाध्ययनं प्रयुङ्क्ते। आचार्यकं तु अङ्गत्वादध्यापनं तदुपकारकत्वाच्चाध्ययनं प्रयुङ्क्ते इति क्रमभेदमात्रम्। नैतावता कश्चिद्विशेषः समानपुरुषगामित्वादग्निहोत्रादीनामेव प्रयोजकत्वं नाध्यापनविधेरिति। न चाग्निहोत्रादि प्रयोजकं, ज्ञानमेव तु प्रयोजकमित्युक्तम्। तदेतद्विस्तरेण प्रपञ्चयिष्यते। कथं चाचार्यकविधिः पुरुषान्तरगामी पुरुषान्तरकर्तृकमध्ययनं प्रयुञ्जीत? समानपुरुषगामिनो हि दर्शपूर्णमासादिविधयः कार्यतया प्रतीयमाना युक्तं यत् तस्यैव पुरुषस्य स्वसाधनेषु प्रयाजादिषु स्वसिद्ध्यर्थमनुष्ठानं प्रयुञ्जते। अन्यसाध्यं तु कार्यमन्यस्य

व्यवस्थापनात् । किंच नामधेयवादे 'वैश्वदेवे विकल्प इति चेत्' ( १।४।१०।१३-१६ ) इत्यधिकरणविरोधः । तत्र 'यद्विश्वेदेवाः समयजन्त तद् वैश्वदेवस्य वैश्वदेवत्व' इति निर्वचनमाश्रित्य वैश्वदेवशब्दस्य नामधेयत्व-व्यवस्थापनात् । किंच तत्सिद्ध्यधिकरणविरोधः ( १।४।१२।२३-१ ) । तत्र 'यजमानः प्रस्तर' इति यजमानशब्दस्य क्रतुनिर्वर्तकत्वगुणयोगात् गौण्या वृत्त्या प्रस्तरे वृत्तेर्व्यवस्थापनात् । किंच जात्यधिकरणविरोधः ( १।४।१२।२३-२ ) । तत्र 'अग्निर्वै ब्राह्मणः' इत्यग्नि-शब्दस्य 'स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री छन्दो, रथन्तरं साम, ब्राह्मणो मनुष्याणाम्, अजः पशूनाम्' इति मुखजातत्वगुणयोगात् गौण्या वृत्त्या ब्राह्मणे वृत्तेर्व्यवस्थापनात् । किंच सारूप्याधिकरण- ( १।४।१२।२३-३ ) विरोधः । तत्र 'यजमानो यूपः' इति यजमानशब्दस्य ऊर्ध्वत्वगुणयोगात् गौण्या वृत्त्या यूपे वृत्तेर्व्यवस्थापनात् । किंच प्रशंसा-ऽधिकरणविरोधः (१।४।१२।२३-४) । तत्र 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वा' इति अपशु-शब्दस्य अप्राशस्त्यगुणयोगात् गौण्या वृत्त्या अजादिपशुषु वृत्तेर्व्यवस्थापनात् । किंच 'सन्दिग्धेषु वाक्यशेषात्' इत्यधिकरणविरोधः । तत्र 'अक्ताः शर्करा उपदधाति' इति विहित- सामान्याञ्जनसाधन 'तेजो वै घृत' इति वाक्यशेषात् घृते व्यवतिष्ठते इति व्यवस्थापनात् । एवं अधिकरणान्तराणि बहूनि विरुध्येरन् । विस्तरभिया विरम्यते । तस्मादर्थवादेषु अवयवार्थानतिक्रमेणैव अजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वम् । कु पृ २७-३१.

* अध्ययनविधिविचारः । 'स्वाध्यायोऽध्येतव्य' इत्यत्र अध्ययनकरणकभावनाया अर्थज्ञानं भाव्यं स्वर्गार्थ-कर्मानुष्ठानौपयिकत्वेन पुरुषार्थत्वात् इति । स्वर्गार्थ-त्वमिति चेत् न, अदृष्टार्थत्वापत्तेः । नापि अक्षरग्रहणं, पुरुषार्थानुबन्धित्वात्, व्याकरणादीनां वेदाङ्गत्वोपपत्तेश्च । अङ्गस्य कार्यजनने सहकारित्वम् । तच्च वेदाध्ययनस्य अर्थज्ञानार्थत्वे उपपद्यते । व्याकरणादीनां वेदार्थज्ञानो-पयोगित्वात्, स्वर्गार्थत्वे वा तदनुपयोगात् । वेदाध्ययनं दृष्टजनकदृष्टार्थकं अर्थवद्विषयकविहिताध्ययनत्वात् अङ्गा-ध्ययनवत् इत्यनुमानात् । अत्र स्तोभाध्ययने व्यभिचार-वारणाय अर्थवद्विषयकेति । विषमन्त्राध्ययने व्यभिचार-वारणाय विहितेति । अतः अर्थज्ञानं भाव्यम् । न च अर्थज्ञानस्य भाव्यत्वे अनध्यायादिनियमानां स्वरूपकार्ययोः अनुपयोगात् अध्ययनाङ्गत्वानुपपत्तिः, कार्योप-योगाभावेऽपि विघ्ननिवारणार्थत्वेन स्वरूपोपयोगित्वात्, नियमापूर्वे उपयोगाच्च । कर्मार्थकतव्यप्रत्ययस्तु सम्बध्यमाने लाक्षणिकः । 'विषं भुनक्ति' 'सक्तून् जुहोति' इतिवत् अनीप्सितकर्मत्वपरो वा । 'ईप्सितकर्मत्वपरत्वेऽपि स्वाध्यायकर्मकभावनाविशिष्टत्वकरणभावनाविधित्वेन एत-स्य विधेः अर्थज्ञानभाव्यकत्व' इति कश्चित् ।

अत्र स्वाध्यायत्वं स्वशाखात्वम् । स्वत्वं च परम्परया अध्ययनविषयत्वं, अनुष्ठानविषयत्वं च । तेन वेदत्वया-न्तर्गतैकशाखापरः स्वाध्यायशब्दः । तेन अध्ययनानुष्ठा-नयोः स्वपरम्परापरिगृहीताध्ययनानुष्ठानविषयत्वोपपत्तिः । तत्र इतिकर्तव्यताऽपेक्षाया योग्यतया विचारः इतिकर्तव्यतात्वेन सम्बध्यते इति विचारकर्तव्यतासिद्धिः । एवं च 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥' ( निरुक्त १।१८ ) इत्यर्थाभिज्ञ-तदनभिज्ञनिन्दास्तुती उपपद्येते इति वार्तिकादय. ।

पितृचरणास्तु प्रोक्षणादिविधौ अपूर्वसाधनत्वेन व्रीहीणामिव अत्रापि प्रयोजनवदर्थज्ञानजनकत्वेन स्वाध्या-यस्यैव भाव्यत्वम् । वेदार्थज्ञानस्य द्रव्यप्राप्तिप्रतिग्रहौपयिक-त्ववत् कर्मानुष्ठानौपयिकत्वं इति लोकसिद्धं पुरुषार्थत्व-त्ववत् । अतोऽयं विधिः प्रतिग्रहादिनियमवत् द्रव्यार्जनवत् । ननु अध्ययननियमस्य निषेधेषु अध्ययननियमार्थ । ननु अध्ययनेनैव विध्यर्थं जानन् विधेयानुष्ठानेन नोपयोगः अध्ययनेनैव निषेधार्थं जानन् फलमाप्नुयात् इतिवत्, अध्ययनेनैव निषेधाध्ययने निषेध्यानुष्ठानेन प्रत्यवेयात् इतिकल्पनाया निषेधाध्ययने प्रवृत्त्ययोगात् इति चेत्, न । तत्र अगत्या अध्ययनेनैव निषेधार्थं अजानन् प्रत्यवेयात् इतिकल्पनात् । न चैतावता अदृष्टार्थत्वं, नापि विनियोगभङ्गः । 'यदेव विद्यया करोति' इति वाक्यं तु अर्थज्ञानस्य नाङ्गता बोधकं, किंतु अदोषनिषिद्धजन्यज्ञानार्थवादः, अस्तु वा

व्यवहारस्य पारमार्थिकत्वपर अध्यारोपदृष्ट्या उपन्यस्तम् ।
अन्यः पक्षः अपवाददृष्ट्या व्यवहारापलापेन । सनत्सु-
जातीये नीलकण्ठः २।३६. * निवत्वप्राप्तिपर्यन्तं भेदः,
रातो नदीसमुद्रवत् जीवब्रह्मणोरभेदे न विरोधः । अध्यारोपा०
प्रपञ्च्यते इति न्यायातिक्रमणे ज्ञानोत्पत्त्यभावेन मुक्त्य-
भावप्रसङ्गात् । श्रीधरः २।१।१८ वस्.

* अध्याहारः अभिमतस्य बुद्धिसन्निधानम् । शा.
१।१।५ पृ. ८२. * अध्याहारः अश्रुतपदान्तरकल्पनम् ।
वैद्यनाथः १।१।१।१ पृ. २. * अध्याहारः अनुषङ्गेण
बाध्यते । यथा 'या ते अग्ने रजाशया' इत्यादौ । बाल.
पृ. १४४. * अध्याहारः वाक्यदोषः । वा. १।४।२।१
पृ. ३२९. * अध्याहारः । 'विश्वजिता यजेत' इत्यत्र
स्वर्गकामः इति वा स्वर्गार्थमिति वा, 'सौर्यं चरुं निर्व-
पेत् ब्रह्मवर्चसकामः' इत्यादौ प्राकृताग्न्यन्वाधानादीति-
कर्तव्यतावाचकस्य आग्नेयवत् इति पदस्य, 'प्रतितिष्ठन्ति ह
वा य एता रात्रीरुपयन्ति' 'सर्वेभ्यो दर्शपूर्णमासौ'
इत्यादौ विधिपदस्य, सौर्यादिविकृतौ आतिदेशिकमन्त्रे
अर्थलोपेन निवृत्ताग्निपदके सूर्यादिपदस्य च अध्याहारात्
इति व्याख्यातम् । स्वस्थानस्थितस्य पुनरनुसन्धानमावृत्तिः ।
नेदीय स्थानान्तरस्थस्य अनुसन्धानं अनुषङ्गः । दवीय स्था-
नान्तरस्थस्य अनुसन्धानं अनुवृत्तिः । सा च सिंहाव
लोकित-मण्डूकप्लुति-गङ्गास्रोतोवदिति त्रिधा । आवृ-
त्त्यनुषङ्गानुवृत्तिसाधारणलक्षणं श्रुतपदस्यानुसन्धानम् ।
अश्रुतपदस्यानुसन्धानं अध्याहारः । स च
सर्वापेक्षया जघन्य इति । मणि पृ ७१.
* अध्याहारः 'स ते प्राणो वातेन' इत्यादौ एकवाक्य-
त्वार्थं, न तु अनुषङ्गः, व्यवेतत्वात् । वि २।१।१८
* 'अध्याहारोऽश्रुताक्षेपो व्यत्यासो व्यवधि पदे । मतो
विपरिणामोऽसौ प्रकृतिप्रत्ययान्यता ॥ वाक्यान्यथालङ्करण
व्यवधारणकल्पना ॥' तत्र अध्याहारोदाहरणं यथा 'विश्व-
जिता यजेत' इति । अत्र हि चतुर्थे स्वर्गकामपदाध्याहार
उक्त. । बाल पृ २६. * विकल्पात्मकप्रयोगासंभवात्
अवाचकप्रयोगानुपपत्तेश्च अध्याहारः । वा २।१।१५।
४७ पृ. ४५०. * भवति च अध्याहारेणापि कल्पना ।
यथा द्वारद्वार इत्युक्ते सन्नियतां अपाव्रियतां इति वा ।

भा. ४।३।५।११. अध्याहारात् वरमनुषङ्गः । वि.
२।१।१६. * अध्याहारात् व्यवहितकल्पना ज्यायसी ।
अध्याहारे हि अश्रुतः शब्दः कल्प्येत, इतरत्र श्रुतेन
सम्बन्धः । भा. ७।४।२।१०. * परित्यागात् वरं अध्या-
हारस्य पूरणम् । अध्याहारादपि स्वपदवृत्तिरेव व्यवहित-
कल्पनया ज्यायसी, धर्ममात्रबाधात् । वा. २।३।१।१
पृ. ५७३, * अध्याहारे यः समवेतार्थः, सः अध्याह्रि
यते । ११।४।७।२८. * अध्याहारदोषं न्यूनस्य
अधिकार्थविपर्यये यथा—'विश्वजिता यजेत' । अत्र
स्वर्गकल्पना अधिका । सा च अगत्या स्वीक्रियते ।
बाल पृ ९.

अध्याहारन्यायः 'अनुषङ्गाधिकरण' इति
बिन्दौ द्रष्टव्यः । भा. २।१।१६।४८.

अध्याहारानुषङ्गन्यायः 'अनुषङ्गाधिकरण'
इति बिन्दौ द्रष्टव्यः ।

* अध्याहारापेक्षया लक्षणाया लघुत्वम् । मणि.
पृ ११०. * अध्याहारोदाहरणं सूत्रे 'शेषमाज्ञा
भवेल्लोप इत्यध्याहारकल्पना' । श्लोवा. १।१।१।४.
अत्र न्यायरत्नाकरः— दर्शपूर्णमासयो प्रधानार्थस्य
अवदानस्य नाशदोषापहारेषु सत्सु शेषादवदानं पूर्वपक्षीकृत्य
हविरन्तरोत्पादने सिद्धान्तिते शेषकार्यार्थं गृहीतस्यावदा-
नस्य नाशादौ सति किं कर्तव्यमित्यपेक्षायां सूत्रं 'अपि वा
शेषभाजां स्यात्' (६।४।३ सू.) इति । अत्र किं
स्यात् इत्यस्य अनिर्देशात् अनन्तरोक्तं हविरन्तरोत्पादनं
संबध्यते, तच्चायुक्तं, नहि प्रतिपत्तिर्द्रव्यं प्रयुङ्क्ते । अथ
तद्-व्यावृत्तिसमर्थात् अपिवाशब्दात् तदन्यपूर्वपक्षोक्त
शेषावदानं सम्बध्येत, तदप्ययुक्तम् । शेषस्य प्रतिपत्त्यन्तर-
गृहीतस्य तत्प्रचयनपूर्वप्रतिपत्तिसम्बन्धाभावात् । तस्मात्
लोप एव अस्यां दशायां युज्यते इति लोपपदाध्याहार
कल्पयिष्यते । इति । * न शक्यं परिपूर्णे वाक्ये अध्या-
हर्तुम् । भा. ४।३।५।१०

अध्यूध्नी तु होतुरुध्यङ्घ्रदिडामक्षविकारः
स्यात् । १०।७।४।१२ ॥

सिद्धान्तसूत्रम् । तुशब्दः संशयनिरासार्थः । अग्नी-
षोमीये पशौ शेषभक्षे अध्यूध्नी विभक्त एव होतुः

प्रयोजनाङ्गीकरणात् वैरूप्यमध्ययनविधेर्मन्तव्य, स्वाध्याय संस्कारभूतेनाध्ययनेन यच्छक्यतेऽपेक्षितं संपादयितुं तत् कुर्यादित्येकयैव वचनभङ्ग्या सर्वार्थलाभेन वैरूप्याभावात्। यदि ह्यध्ययनं स्वाध्यायद्वारकं कदाचित् स्यात् प्रधानकर्म, कदाचिच्च स्वाध्यायसंस्कारः तदा 'स्वाध्यायोऽध्येतव्यः' इति पदद्वयार्थयोर्गुणप्रधानभावाद्वैरूप्यं स्यात्। न त्वेतदस्ति, सर्वथैवाध्ययनस्य स्वाध्यायप्रधानत्वात्। कश्चिदाह न संस्कारत्वमध्ययनस्योपपद्यते, स्वाध्यायस्य भूतभाव्युपयोगाभावात्। नहि तस्यायत्ताने विनियोजकं किंचिदस्ति। न चाध्ययनविधिरेवास्य विनियोजक इति युक्तं, संस्कारविधित्वात्। सक्तुसंस्कारहोमविधिवत् (यथा) सक्तून् संस्कार्यं विनियुङ्क्ते। तेन नाध्ययनसंस्कारार्थत्वं संभवति।

तदेतद्भाष्यवार्तिकपरिश्रमानुपस्थापन्यायशिक्षातमिस्रातिरस्कृतविवेकस्य मीमांसान्यायमोक्षमानभिज्ञस्य अनुपासितगुरोर्मानुषप्रियस्य यत्किंचित्प्रलपितम्। तथाहि,

स्वाध्यायमात्रपर्यन्ते विनियोगे भवेदयम्।
दोषो, ऽर्थज्ञानपर्यन्ते सति सामर्थ्यक्रमेण तु ॥४१॥

यदि हि अध्ययनस्य स्वाध्यायसंस्कारमात्रपर्यन्तो विनियोगः स्यात्, तदाऽयं दोषः स्यात्। यदा तु अध्ययनस्याक्षरग्रहणादिपरम्परयाऽर्थज्ञानसाधनस्य स्वाध्यायसामर्थ्यानुसारेण तत्पर्यन्त एव विनियोगः, तदाऽनेनैव विधिना स्वाध्यायस्याप्यर्थज्ञाने विनियोगो लभ्यते। तत्संस्कारद्वारेण स्वाध्यायस्यार्थज्ञानसामर्थ्यात् विनियुक्तिः पुनस्तज्ज्ञाने पर्यवस्यति। तत्तदपि द्वारीभूय क्रत्वनुष्ठानफलावसानं गच्छति, न च स्वत एव सिद्धत्वात् ज्ञानस्य फलवत्कर्मानुष्ठानाङ्गत्वं सामर्थ्यादेव नियमेन सिद्धम्, इति न तत्र स्वाध्यायविधेर्नियमेन व्यापारः। अध्ययनादि तु ज्ञानपर्यन्तं न नियमतः सिद्धमिति भवति तत्र विधेरर्थवत्ता। तेन ज्ञानप्रयुक्तमध्ययनं न तु क्रतुप्रयुक्तमिति तेनाध्ययनेन यथाक्रमसामर्थ्येनाध्ययनं कुर्यादित्युक्तं अर्थमवगम्यते 'अधीतेन स्वाध्यायेनार्थं जानीयात्' इति। अत एवार्थज्ञानं प्रति उपादेयतया स्वाध्यायस्य संस्कार्यत्वं भाष्यकाराधिकरणे दर्शितम्। तद्यथा साम स्तुतौ विनियुक्तस्यापि साम्नः संस्कार्यता न हीयते तद्द्वारेणैव स्तुतिसाधनत्वात्, नहि तत्र ऋचां वाक्यान्तरेण स्तुतौ विनियोगोऽस्ति, अथ च तत्संस्कारकत्वमेव साम्नो भवति, यथा स्वल्पनिर्वापे अविनियुक्तेऽपि चरौ 'चरुमुपदधाति' इत्यनेनैव चरुप्रधाने स्थाल्यङ्गतया विनियुक्ते तस्य स्वयं स्वल्पनिर्वर्तकत्वाभावात् उपहितेन चरुणा तन्निर्वृत्तिदर्शनात् तद्द्वारेण चरुप्रधानस्यापि इष्टकार्थत्वे संभवति आरादुपकारकत्वकल्पनाऽयोगात् चरौ स्थाल्यङ्गत्वं प्रधानस्य च तत्संस्कारकत्वं भवति। अत एवंजातीयकस्वभावत्वं संस्काररूपमपि पूर्वविनियुक्तसंस्कार्योद्देशेनाविधानात् कदाचिदर्थकर्माभिधानमपि लभते। अनेनैवाभिप्रायेणोक्तं 'अर्थकर्मण्यपि चोपधानं प्रति प्राधान्यमस्त्येव' इति (वा २।१।३।१८ ॥ ६०)। न तु परमार्थतोऽर्थकर्म सामवदेव। अतः संस्कारकर्म। संस्कार्ये तु अनेनैव विनियुक्तं कार्यस्याङ्गमिति। एतेन ऋचां स्तुतौ अविनियोगादनङ्गत्वमभिदधाना उपेक्षणीया। तत् सिद्धं नाध्ययनविधेर्वैरूप्यमिति। नन्वसत्यपि वैरूप्ये नानाप्रयोजनकल्पनमयुक्तं 'एकं वा चोदनैकत्वात्' (४।३।६।१४) इति न्यायात्। स्यादेतत् यदि कल्पनीयं स्यात्, क्लृप्तमेव तु तत्। यथोक्तं बहुप्रयोजनसाधनत्वमध्ययनस्य स्वभावतः, ततश्चाध्ययनेन स्वाध्यायद्वारं यदपेक्षितं शक्यते संपादयितुं तत् संपादयेदित्येकयैवानेनैव सर्वार्थलाभात् किंचित् गौरवं वैरूप्यं वा। अत एव निघण्टूनामपि भक्तिदादिवाक्यानां संस्कारकत्वमध्ययनस्येष्यते यत्र यत्र स्मारको न विद्यते, स्मार्यते हि निघण्टुभिरपि सर्वपदार्थनिमित्तं स्मरणं संपादयितुम्। अस्मिंश्चार्थे स्वाध्यायविधिविहितस्य वाक्यक्रमस्य प्रयोगक्रमेणैव वाक्ये पदार्थाः स्मर्यन्ते इति। नहि विधौ तेषां क्रमेण कार्यमस्ति स्मरणं हि कुर्वतामेषां क्रमः स्मरणे क्रममाश्रित्य सार्थपदार्थानुष्ठानक्रमं पश्यतीति मन्तव्यम्।

तदेतत् सूत्रकारेण पञ्चमे स्पष्टीकृतम्।

अस्त्वेकत्वे परार्थत्वात् तस्माद्वाक्यमारभ्यकं स्वयम्
॥४२॥

'अनेकत्वे परार्थत्वात्' (१।१।८६) इत्येतत्सूत्रव्याख्याने भाष्यकारो न तथैव परार्थो हि वेद इत्यनेन

तां होत्रे, नान्यस्मै' इति । होत्रे तु अन्य भक्षं कुर्वन्तीति । अपिच 'होत्रे हरन्ति' इति आनन्तर्यादेकवाक्यता प्रत्यक्षा । इतरस्मिन् पक्षे ' अभ्यूषीं हरन्ति ' इति च होतृशब्दव्यवधानात् कल्पयितव्या भवेत् । तस्मात् भागे नियमो रथवत् । यथा ' यजुर्युक्तं रथमध्वर्यवे ददाति ' इति रथस्य वाक्यान्तरेण प्राप्तत्वात् अव्यवधानाच्च अध्वर्युभागे नियमः । एवमिहापि होतृभागे नियम इति ।

अशास्त्रत्वात्तु नैवं स्यात् । १४ ॥

भाष्यं—तुशब्दः पक्षं व्यावर्तयति । न भागे नियमः, इडाभक्षविकार इति । कुतः ? नास्ति शास्त्रं येन इडाभक्षे अभ्यूषी स्यात् । ननु इदमुक्तं 'अनरियमिरिडा वर्धयन्ति' इति । उच्यते । अनुवादस्वरूपत्वादस्य, प्राप्तत्वाच्च अनरियकाला वचनान्तरेण ' अथ यत्र परिशिष्यते तत् समवत्तधान्यामानयति, यद् हृदय मास्यति, जिह्वा, वक्षः, स्वनिम, तस्मा यनिष्टुं' इति अनुवाद इति गम्यते । न चात्र अभ्यूषी कीर्त्यते । तस्मादप्राप्ता, अप्राप्ता चेत् होतृहरणमुद्दिश्य विधीयते । यत्तु व्यवधानात् अप्राप्तेव एकवाक्यता कल्पयितव्या इति, अपूर्वत्वादभ्यूष्याः अनुवादाभावे अनर्थक्यपरिहाराय कल्पयिष्यामः । एव च स्वरदगत हरणं विहितं भविष्यतीति । इतरथा तु होत्रभ्यूषीसम्बन्धो विधीयेत, न स्वरदगत हरणम् । तस्मादपि भक्षविकारः ।

अपि वा दानमात्रं स्याद्, भक्षशब्दानभिसंयोगात् । १५ ॥

भाष्यं—अपिवेति पक्षव्यावृत्तिः । यद्येवं, न वचनान्तरेण इडाभक्षे अभ्यूषी प्राप्ता, सा अपूर्वं हर्तव्या विधीयते, न तर्हि भक्षविकारः । दानमात्रमेतत् ' होत्रे अभ्यूषीं हरन्ति ' इति । नात्र भक्षशब्देन अभिसंयोगो विधीयते । तस्मान्न भक्षविकार इति ।

दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषप्रत्यविशिष्टत्वात् । १६ ॥

भाष्यं—तुशब्दः पक्षं व्यावर्तयति दानमात्रमेतद् । यदुक्तं न भक्षविकार इति । नैतद्दानं दातुरभावात् । यजुर्वेद एव संकल्पितः यत्र यजमानेन नान्यद् स्वरूपं अनेन कार्यमिति । तेन स्वाम्यभावात् दानं नास्ति । कथं स्वाम्यभावः ? शेषं प्रति अविशिष्टत्वात् । शेषं प्रति यथा यजमानस्तथा होता । उभावपि न प्रभवतो द्रव्यस्य, इति नास्ति दानम् ! अथ कथं भक्षशब्दानभिसंयोगे भक्षः ? चतुर्थीश्रवणात् । चतुर्थी तादर्थ्ये भवति, होत्रर्थां अभ्यूषी, तत्र होता अभिप्रेतते, सा होतुरुपकरोति । सा भक्ष्यमाणा सामर्थ्यजननस्य द्रव्यस्य लाभाय यथा च यावता च मात्रया उपकारिणी भवति । तत्र चतुर्थीश्रुतिरनुगृह्यते । इतरथा हि अदत्यमाने उपकारे चतुर्थीश्रुतिर्बाध्यते । तस्मादिडाभक्षविकार इति ।

शा—यत् होत्रे हरन्ति तदभ्यूषी इति प्राकृतं होतृसम्प्रदानक हरणं अभ्यूषीप्रतिपादने विनियुज्यते । तस्मात् इडाभक्षविकारः ।

सोम—भ्यूषैरग्निज्वालोपैः इदयादीनामिज्यादीयाना बाधेऽपि अग्निज्वालोपमूलाभ्यूष्या न तेषां भाष. इडुतियते. सगतिः । ( अभ्यूषी इत्यादिभ्योऽन्यदर्थे इति के चित् । अनरियरूपप्राया शिक्षाख्या अभ्यूषी इत्यन्ये ) ' अभ्यूषिलासो भाव ' इति धूर्तस्वामी । सूत्रार्थस्तु—अभ्यूषी होतुर्भक्षविकारः स्यात्, यथा भ्याज्ञानामिज्यालोपविकारत्वे तद्वदिति ।

वि—' होतुर्नीयतेऽभ्यूषी किं वेडा विकृतीति वा ।, अनरियमिरिति प्रत्ता होतुः पक्षे नियम्यते ॥, अनुवादोऽनरियवाक्य प्राप्तिका परिशिष्टतः । नाभ्यूषी तत्र तेनेडा होतुर्विक्रियते यथा ॥ '

भाट्ट—पक्षौ इहा अतिदेशप्रसक्त प्रसङ्ग ' अभ्यूषीं होत्रे हरन्ति ' इति श्रुता अभ्यूषी प्रकृतप्र इत्युत्तर होतुरिडाभागस्य निवर्तिका न वा इति चिन्तायां, अभ्यूषी तावत् अत्र द्विविधान्यवादुद्देश्या प्रतिपाद्या च आकाङ्क्षत्वात् । तदुद्देशेन च होतृसम्प्रदानक भक्षार्थं हरणमात्रमर्थत्वं प्रत्यक्षत्वेन विधीयते । हरणं च यदपि न दानं अपितु, स्वत्वाभावेन तदनुपपत्तेः, तथापि भक्षार्थं समर्पणं, तत्र च कथं चिद् संप्रदानत्वोपपत्तिः । अथवा होतुस्स्वकर्मगोचरत्वेन होत्रर्थत्वं तत्र तदर्थचतुर्थी इत्यत् । सर्वथा होतुरिडाया प्रत्यक्ष तस्य हरणस्य अभ्यूषीनिष्पादनेन सिद्धिः । अतिदेश-

तदनुपपत्तेरध्ययनविधिरेव विचारमाक्षिपन् तद्विरुद्धं स्मार्तं स्नानं बाधते इति सिद्धमध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति । शा. १।१।१ पृ. ५–७.

* अध्ययनविधिविचारः । 'स्वाध्यायोऽध्येतव्यः' इति वेदार्थज्ञानाय अध्ययनविधिः । अत्र हि विधौ कर्मणि तव्यप्रत्ययः । उत्पाद्यत्वं आप्यत्वं संस्कार्यत्वं वा कर्मत्वं यथा 'घटं करोति' 'ग्रामं गच्छति' 'व्रीहीन् प्रोक्षति' इति । अध्ययनं च भावार्थाधिकरणन्यायेन ( २।१।१।१ वर्णकं २ ) भावनायां करणत्वेन अन्वेति । स्वाध्यायस्य च तेन उत्पाद्यत्वासंभवात् आप्यत्वं संस्कार्यत्वं वा कर्मत्वं भवति । ततश्च 'अध्ययनेन स्वाध्यायं प्राप्नुयात्' इति वचनव्यक्तिः, 'अध्ययनेन स्वाध्यायं संस्कुर्यात्' इति वा । तत्र अध्ययनेन अवाप्तस्य संस्कृतस्य वा स्वाध्यायस्य स्वतः अपुरुषार्थत्वात् फलाकाङ्क्षायां अधीतवेदजन्यधर्मावबोधस्य दृष्टस्य स्वर्गादिसाधनतया फलत्वात्, इति च संभवे अदृष्टकल्पनाऽयोगात् तमेव प्रयोजनवदर्थावबोधपरनामधेय अधीतस्वाध्यायः फलत्वेन गृह्णाति, अनारभ्याधीतस्यापि अध्ययनस्य सामर्थ्यादेव क्रतुविध्याश्रितार्थज्ञाने उपयोगसंभवात् । ततश्च, 'अधीतेन स्वाध्यायेन अर्थावबोधं भावयेत्' इति पर्यवसन्नोऽर्थः । तत्र अर्थवादानां वाक्यविधया धर्मप्रमितिजननशक्त्यभावेऽपि कृत्स्नस्य वेदस्य प्रयोजनवदर्थावबोधपर्यवसानं बोधयता अध्ययनविधिनैव विध्यपेक्षितप्राशस्त्यतात्पर्यानयनमुखेन उत्थापितलक्षणविधया तत्प्रतिपादनद्वारा विध्युपयोगात् धर्मप्रामाण्यमुपपद्यते इति वार्तिकादिग्रन्थेषु स्थितम् । वस्तुतस्तु स्वाध्यायविधिः अक्षरानुपूर्व्यवधारणरूपग्रहणार्थः । अर्थावबोधस्तु गृहीतपदपदार्थसंगतिकस्य स्वत एव भवति, न तु तत्र अध्ययनविधेर्व्यापारः, धर्मावबोधान्तत्वे अध्ययनाकार्त्स्न्यप्रसङ्गात् । ब्राह्मणस्य राजसूयानधिकारेण तत्प्रकरणाध्ययनस्य व्यर्थत्वात् । किंच अग्निहोत्रादिलक्षणवेदार्थस्य अध्ययनात् प्राक् संध्योपासनवत् पित्राद्युपदेशतो ज्ञाने सति ज्ञातत्वादेव तदवबोधस्य काम्यत्वाभावात् फलत्वानुपपत्तिः । ततः प्राक् तदज्ञाने तु न स कामयितुं शक्यः । ज्ञाते एव इच्छानियमात् । अथ सामान्यतो ज्ञाते, विशिष्य अज्ञाते तदिच्छा संभवति । पित्राद्युपदेशतो विशिष्यावगतेऽपि औपदेशिकज्ञानस्य प्रामाण्यनिश्चयाय पुनर्बोधकामना च युक्ता इति चेन्न । अग्निहोत्रादिविशेषज्ञानानां हि न तावत् एकबुद्ध्या विशेषाकारेण उद्देशः, अनन्तत्वात् । सामान्याकारेण उद्देशे च सामान्यज्ञानमेव विधिफलं स्यात्, न तु विशेषज्ञानम् । अतः अर्थावबोधस्य उद्देश्यत्वायोगात् न फलत्वम् । न च अध्ययनविधेः अर्थावबोधान्तत्वाभावे वेदस्य कथं स्वार्थे तात्पर्यावगमः इति वाच्यम् । उपक्रमादिसहकृतशब्दबलादेव तल्लाभात् । तस्मात् अध्ययनविधिः अक्षरग्रहणमात्रफलक एव । तथा च गुरुपार्थानुशासनसूत्राणि वेदभाष्योदाहृतानि 'बोधान्तत्वेऽध्ययनाकार्त्स्न्यम्' । 'सोऽकाम्यः प्राग्बोधभानाभानयोः' । 'उद्देश्यायोगाच्च' इत्यादीनि । एवं च व्याकरणमहाभाष्ये पस्पशाह्निके 'ब्राह्मणेन निष्कारणो वेदः षडङ्गोऽध्येयो ज्ञेयश्च' इत्युदाहृतायां श्रुतौ 'ज्ञेयश्च' इति पृथक् ज्ञानविधिः अर्थवान् भवति । अध्ययनविधेः बोधान्तत्वे तु तदानर्थक्यं स्पष्टमेव । निष्कारणः— कार्यते अनेन इति कारणं फलम् । दृष्टप्रयोजननिरपेक्षः शिक्षाव्याकरणादिषडङ्गसहितो वेदः अध्ययनेन ग्राह्यः तदर्थश्च प्रतिपत्तव्यः । सोऽयं धर्मो न दृष्टफलः, नित्य इति यावत् । तदभावे हि प्रत्यवायः स्मर्यते 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' इत्यादिः । न च गृहीतपदपदार्थसंगतिकस्य स्वत एव ज्ञानसंभवात् तद्विधिर्व्यर्थ इति वाच्यम् । नहि अवश्यं गृहीतपदपदार्थसंगतिकेन भाव्यं इति लोकतो लभ्यं, अश्रूयमाणानामपि बहूनामुपलम्भात्, पदपदार्थसंबन्धग्रहमात्रसत्त्वेऽपि अतिगहनवेदार्थज्ञानस्य न्यायविचारमन्तरा अनुपपत्तेश्च । अतः पदपदार्थसंगतिमधिगम्य न्यायविचारतो यथावत् वेदार्थज्ञानमावश्यकतया विधीयते । तदपि स्वस्वपित्रादिक्रमागतवेदभागमात्रस्य, नेतरस्य वेदभागस्य, स्वाध्यायविधौ स्वपदानर्थक्यापातात् । तथा च स्वशाखाया अध्ययनं अर्थज्ञानं च नित्यम् । इतरशाखानां तु अध्ययनं अर्थज्ञानं च क्रतुविधिप्रयुक्तं आर्थिकमेव, न च तत्र स्वाध्यायविधेः व्यापारः । एवं च स्वशाखाध्यायिनां स्वाधिकृतकर्मविधि-

नात् विध्यर्थवादानां परस्पराकाङ्क्षावशात् एकवाक्यत्वं इति सिद्धान्तो वार्तिककारानुक्तः अनुपपन्नः ।

अर्थवादानां स्तुतिपरतया विध्येकवाक्यता तु अन्यतराकाङ्क्षयैव उपपाद्या । तथाहि । यथा ‘ रक्तः पटो भवति ’ इति वाक्ये ‘ पटो भवति ’ इत्येतावति निराकाङ्क्षेऽपि ‘रक्तः’ इत्यस्य भवतिक्रियाऽन्वयं विना आनर्थक्यापत्त्या सन्निधिपाठवैयर्थ्यापत्त्या च पटवाक्यस्य रक्तपदे आकाङ्क्षोत्थितौ पटविशेषणसमर्पकतया रक्तपदं पटवाक्यान्तर्भावमापद्यते , तथा अर्थवादानां स्वार्थतो निराकाङ्क्षत्वेऽपि विधिप्रत्ययगम्यायाः शब्दभावनायाः अङ्गत्रयमपेक्षमाणायाः विधिप्रत्ययत एव साध्यतां पुरुषप्रवृत्तिं , करणांशं शक्तिग्रहादिकं च व्याकरणादितो लब्धवत्याः, तृतीयांश स्तुतिं अपेक्षमाणायाः स्तुतिलाभमन्तरा अनुपपत्त्या विध्युद्देशसन्निध्याम्नानवैयर्थ्यापत्त्या च अर्थवादाना विध्युद्देशाकाङ्क्षा उत्तिष्ठति । तद्वशाच्च लक्षणया तेषां स्तुतिपरत्वं इति भाष्यानुयायी सुगमः पन्थाः । किंच ‘ ओषधे त्रायस्व ’ ‘ स्वधिते मैनं हिंसीः ’ इत्यादिमन्त्रेष्विव ‘ स आत्मनो वपामुदखिदत् ’ ‘ गावो वा एतत् सत्रमासत ’ इत्याद्यर्थवादवाक्येष्वपि असद्वृत्तान्वाख्यानेन केवलविधेयस्तुतिपरत्वं , न तु स्वार्थपरत्वमपि, तथा सति अप्रामाण्यप्रसङ्गात् । नहि वेदे मानान्तरस्यापि आनर्थक्यमिष्यते । तथा च ‘तत्सामान्यादितरेषु तथात्वं ’ इति न्यायेन (१।२।२।२३) तदितरेषामपि ‘ वायुर्वै क्षेपिष्ठा ’ इत्याद्यर्थवादानां न स्वार्थपरत्वम् । किंतु अजहत्स्वार्थलक्षणया केवलविधेयस्तुतिपरत्वं इति प्रच्छन्नबौद्धाः केचित् मीमांसकम्मन्याः ( प्राभाकराः ) प्रतिपन्ते । वैदिकशिरोमणयो वार्तिककृतस्तु सर्वेष्वपि अर्थवादवाक्येषु अनन्यार्थानतिक्रमेणैव अजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वम् ( प्रतिपादयन्ति ) । ‘स आत्मनो वपां ’ इत्यत्रापि सर्गादौ परमेश्वर एव स्वमहिम्ना पशुरूपमन्यदेकं स्वीकृत्य तद्वपोत्खननेन धर्मं प्रायुङ्क्त इत्येवं प्रकारेण सर्वत्र स्वार्थे सत्यता उपेया । ‘ आपो वा इदमेक एवाग्र आसीत् ’ ‘ यतोऽस्य सृष्टिस्थितिर्लय भूतो यथामतिरिति ज्ञानयन्त्रिया च ’ इत्याद्यर्थवादवाक्यैः अचिन्त्यशक्तिपरमेश्वरस्तत्कर्तृत्वस्थितिन्यायप्रकारात् । ‘ आदित्यो यूपः ’ इत्यादावपि ऊर्ध्वत्वादिगुणयोगात् स्वार्थपरताऽपि । तथा च ‘ विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥’ इति मन्यन्ते । युक्तं चैतत् ‘ गुणवादस्तु ’ ‘ रूपात् प्रायात् ’ ‘दूरभूयस्त्वात्’ ‘स्वापराधात् कर्तुश्च पुत्रदर्शनात् ’ ‘ आकालिकेप्सा ’ इत्यादिभिः अर्थवादाधिकरणगुणसूत्रैः ‘स्तेन मनः’ इत्यादिषु गौण्या वृत्त्या अवयवार्थपरत्वस्यापि प्रदर्शनात् । किंच अर्थवादानामनन्यार्थपरत्वाभावे ‘विधिशब्दाश्च’ इति मन्त्राधिकरणस्थगुणसूत्रविरोधः । तत्र ‘ अग्ने गृहपते सुगृहपतिः ’ इत्यादिमन्त्रेषु ‘ शतं हिमाः ’ इत्याद्यंशानां ‘ शतं त्वा हेमन्तानिन्धिषीय इति वावैतदाह ’ इत्यादिवाक्यशेषाः मन्त्राणां विवक्षितार्थत्वे लिङ्ग इति व्यवस्थापनात् । किंच स्मृतिपादे यववराहाधिकरणविरोधः ( १।३।८।८-९ वा. पृ. २१८-२२० ) । तत्र यववराहवेतसशब्दानां क्रमेण प्रियङ्गुवायसजम्बूषु दीर्घशूकसूकरवञ्जुलेषु च लोके प्रयुज्यमानानामपि वेदे ‘यवमयश्चरुर्भवति ’ ‘ वाराही उपानहौ उपमुञ्चते ’ ‘ वेतसे कटे प्राजापत्यान् संचिनोति ’ इत्यत्र ‘ यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमाना इवोत्तिष्ठन्ति ’ ‘ वराहं गावोऽनुधावन्ति ’ ‘ अप्सुजो वेतसः ’ इति वाक्यशेषैः दीर्घशूकसूकरवञ्जुलपरत्वव्यवस्थापनात् । किंच निषादस्थपत्यधिकरणविरोधः (१।३।५।९ वा. पृ. २२१-२२४) । तत्र अश्वशब्दस्य ‘ यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्, सोऽपः प्राविशत्, स वाल्मी पदीत., स वाल्मान् मुक्त्वा निवेश, ते वाला काशा अभवन् ’ इति वाक्यशेषेण काशपरता व्यवस्थापनात् । किंच चित्राख्याधिकरणविरोध. ( १।४।२।३ ) । तत्र ‘ यदाग्निमयुः तदाग्नेयानामाज्यत्व ’ इत्याज्यशब्दनिर्वचनेन ‘ आपो वा ऋत्विजमाजन् तासां वायुः पृष्ठे व्यवर्तत ’ इत्यादिवृत्तान्तमवा वायुस्पर्शात् स्वतरङ्गानामुपरितनिपातनेन स्वर्णजन्य पृष्ठ इति निर्वचनेन च आज्यपृष्ठशब्दयो नामधेयत्वव्यवस्थापनात् । किंच ‘ तद्व्यपदेशं च ’ ( १।४।४।५ ) इत्यधिकरणविरोधः । तत्र ‘यथा ह वै श्येनो निरयादत्ते एवमयं द्विषन्तं भ्रातृव्यं निरादत्ते ’ इति वाक्यशेषसिद्धां गौणीं वृत्तिमाश्रित्य नामधेयप-

मण्डन— ' नोहोऽग्निषौ तुल्यविधानपक्षे । '
शंकर— ' नोकस्याद्यग्निषुस्तथा । ' नोहः ।

॥ अग्निषुप्रेषगतस्य मेधपतिशब्दस्यैकवचनान्तस्य एकादशिन्यामूहः ॥

अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात् स्यात् । ९।३।१४।४४ ॥

भाष्यं— अस्त्यैकादशिनी ' प्रैषाऽऽग्नेयेन यापयति, मिथुनं सारस्वत्या करोति, रेत. सौम्येन दधाति, प्रजनयति पौष्णेन' इत्येवमादि । अस्ति च प्रकृतावग्निषुप्रैष एकवचनान्तो द्विवचनान्तश्च मेधपतिशब्दः । तस्येह चोदकप्राप्तिश्चिन्त्यते । द्विवचनान्त ऊहितव्य एव । अथैकवचनान्तः किमविकारेण प्रवर्तेत, उत निवर्तेतेति । किं प्राप्तम् ? ' विकल्पो वा प्रकृतिवत्' इति ( पूर्वाधिकरणन्यायेन ) । एवं प्राप्ते ब्रूमः । विकार एवैकादशिन्या, न विकल्पः । तत एवैकवचनान्तेन निवर्तितव्यम् । कुतः ? देवतापृथक्त्वात् । पृथगत्र देवता अन्यस्य पशोरन्या देवता, अन्यस्यान्येत्येवम् । नात्र गणो देवतात्वेन । तदभावात् समर्थत्वमपि नास्ति । प्रकृतौ चैतत् द्वय कारणमेकवचनान्तस्य निवेशे । न तदभावादिहास्ति प्रवृत्तिः । यथोक्तं, 'एकत्वेऽपि गुणानपायात्' इति ( ९।३।१३।४० ), परपक्षमन्वारुह्य तद्वचनं, न स्वमत. । तस्माददोष इति ।

शा— गणाभिप्रायेण पूर्वनदनूह मन्वानस्योत्तर 'देवतात्मन एकत्वाद्विकारः पुरोदितः । तद्रूपस्य तु भिन्नत्वे यो नामोह निवारयेत् ॥'

सोम— वह्नो देवतात्वात् देवतासारस्यैक्यात् पूर्ववदनूहः इत्युत्थितेः संगतिः । सूत्रार्थस्तु-अर्थान्तरे ऐकादशिनादौ देवताकारकभेदाद्विकारः स्यात् प्रत्येकमेव तद्धितादिसमवायात् प्रत्येकमेव देवता स्यादिति ।

वि—' कृष्णग्रीवादिके नोह ऊहो वा, ऽस्य न पूर्ववत् ।, देवत्व न गणस्यात ऊहो वहुभिधित्सया ॥'

भाट्ट— यत्र तु देवतात्वानि अनेकानि अधिष्ठानं तु एकमनेकं वा तत्र ( अग्निषुप्रेषगतमेधपतिशब्दस्य ) एकवचनान्तस्यापि ऊहः । यथा ' त्वाष्ट्रं पात्नीवतं ' ' अग्नये पावकाय पशुमालभेत ' ' आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः ' इत्यादौ । अत्र त्वाष्ट्रपात्नीवतोः अग्निपावकयोश्च अधिष्ठानैकत्वेऽपि तद्धितचतुर्थीभेदात् देवतात्वभेदः । तृतीयोदाहरणे तु उभयभेदः । अतस्तत्र उभयोरपि मन्त्रयोः तत्तत्सख्यावशेन ऊहः । न च अनयोर्मन्त्रयोः अर्थद्वयावलम्बनेन उद्दानीकारे प्रकृतौ नियमो वा देवतात्वतदधिष्ठानरूपार्थभेदात् समुच्चयापत्तिरिति वाच्यम् । उभयोरपि उभयार्थप्रतिपादकत्वेन विकल्पोपपत्तेः । एकवचनान्तो हि देवतात्वे परंपरासम्बन्धघटकपरंपरासम्बन्धेन मेधपतित्व वदन् परंपरासम्बन्धघटकतया अधिष्ठानमपि उपस्थापयति । अग्नीषोमादिना तदुपस्थितिस्तु मेधपतिपदात् अशक्यैव । द्विवचनान्तोऽपि अधिष्ठाने मेधपतित्व वदन् स्वीयसाक्षात्सम्बन्धस्य देवतात्वाधीनत्वात् देवतात्वमपि उपस्थापयति इति सत्यपि विषयताभेदे उभयोरपि उभयोपस्थापकत्वात् विकल्पोपपत्ति. ।

न्यायबिन्दुः— पशुगणे तु गणाभिप्रायेणैकवचनानूहं मन्वानस्योत्तर देवतारूपभेदे ऊह एव, तदैक्ये पर्नानूह इति सिद्धान्त. ।

मण्डन— 'एकादशिन्या निवृत्तिस्तु तत्र' तत्र मेधपतिशब्दे निवृत्तिः विकारः ऊहः ।

शंकर— 'देवताभेद ऊहः स्यात् ।' भेदे ऊहः । १५.

॥ अग्निषुप्रेषगतस्य मेधपतिशब्दस्यैकवचनान्तस्य बहुदेवत्ये पशौ द्विवचनान्तेन विकल्पः ॥

नियमो बहुदेवते विकारः स्यात् । ९।३।१३।४२॥

भाष्य— अस्ति बहुदेवत्यः पशु । ' स एतान् पशून् आदित्येभ्यः कामायाऽऽलभते ' इति । तथा ' वैश्वदेव धूम्रमालभेत' इति । अस्ति तु प्रकृतावग्नीषोमीये द्विवचनान्त एकवचनान्तश्च मेधपतिशब्दः । अत्र चोदकप्राप्तः सन्दिह्यते किं द्विवचनान्त ऊहितव्य. एकवचनान्तो निवर्तेत, उतोभावपि परस्परेण विकल्पमानौ निविशेयातामिति । किं तावत्प्राप्तम् ? द्विवचनान्त उभयत्राभिधायित्वादूहितव्यः । एकवचनान्तः अशक्तत्वादभिधानुमित्येतावता दर्शनेन निवर्तेत । एव नियमः । आह । ननु प्रकृतौ द्वित्वस्याविवक्षितत्वादविकारेण प्रयोगः प्राप्नोतीति । उच्यते । अविरोधकमत्र द्वित्व , न तु तत्र

'यत् करोति' इति वैदिककर्मसामान्यमुद्दिश्य विधा-पदलक्षितार्थज्ञानविशेषनियमार्थः सन् अङ्गताबोधकः व्रीहिविधिवत्, तथापि न क्रतुपूर्वार्थज्ञानजनकत्वेनैव उद्देश्यता, येन अध्ययनस्य अङ्गता स्यात्, स्याच्च प्रकरणापेक्षा। स्वाध्यायस्योद्देश्यत्वादेव चद्गतैकत्वाविवक्षया 'वेदानधीत्य' इत्यादिस्मृतेः एतन्मूलकत्वे न तन्मूलश्रुत्यन्तरकल्पनागौरवम्। तेन अर्जनविधिवत् अर्थज्ञानजनकत्वेनैव उद्देश्यता इति अर्थज्ञानफलकविधिः विचारकर्तव्यताऽऽक्षेपक इत्याहुः। तेन अर्थज्ञानपर्यन्तं गुरुकुलवासो विचारकरणं च अध्ययनविधेः फलं, कर्त्रधिकारनियमाच्च। तथाहि 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं' इत्यादिवाक्यैः ब्राह्मणाद्यङ्गत्वेन उपनयनं विधीयते। 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिवाक्येषु ब्राह्मणाद्युद्देशेन अष्टवर्षत्वादिविधिः। तत्संनिधिपठितश्च अध्ययनविधिः कर्त्रपेक्षः कार्यापेक्षान् उपनीतानेव कर्तॄन् गृह्णाति, इति अध्ययनविधिप्रयुक्ताध्ययनजन्यार्थज्ञाने त्रैवर्णिकानामेव सिद्धे· क्रतुविधयोऽपि अर्थज्ञानोपायाक्षेपकल्पनालाघवसहकृताः ब्राह्मणादिपराः एव भवन्ति, इति शूद्रादेः उपनीतकर्तृकाध्ययनजन्यार्थज्ञान-रूपाङ्गसंपादनासमर्थस्य नधिकारः। 'तमध्यापयीत' इति संनिधिसिद्धोपनीतकर्तृकत्वानुवादः, यद्वा उपनयनाध्या-पनवाक्ययोः प्रयोजकव्यापारविवक्षया उपगमनाध्ययन-विधिः, 'अष्टवर्षो ब्राह्मण उपगच्छेत् सोऽधीयीत' इति। वाक्यान्तरीयत्वेन स्वाध्यायविधेर्नानर्थक्यम्। कर्मणा नित्यतया उपनयनाध्ययनयोः फलतो नित्यत्वम्। यद्वा 'ब्रह्मक्षत्रविशां काल औपनायनिकः परः। अत ऊर्ध्वं पतन्त्येते' इतिवाक्येन 'अनधीयाना व्रात्या भवन्ति' इति निषेधेन च नित्यत्वसिद्धिः। भणि. पृ २–५. * अध्ययनविधिसामर्थ्यलक्षणेन हेतुना सर्वस्य वेदस्य अर्थवत्त्वावधारणम्। सु. पृ. ३९४. * अध्ययनादिनियमे श्रौते उपनीतस्याधिकारो नानुपनीतस्य। वि. ६।२।६. * अध्ययनाधानयोः निर्ज्ञाततैवर्णिककर्तृकत्वात् तदधीन-सिद्धीना कर्मणा आर्थिमात्रसंबन्धावगमेऽपि सति अप-शूद्रविषयत्वमेवावतिष्ठते (तथा च शूद्रस्याधिकारो नास्ति)। वा. २।३।२।३ पृ. ५७९. * अध्ययनानन्तरं मीमांसा कर्तव्या न वा इति संशये धर्मज्ञानार्थं कर्तव्या इति सिद्धान्तः। भा. १।१।१।१.

* अध्यापनम्। याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः स्मृत्युक्ताः। भा. १२।४।१५।४३. * अध्यापने ग्रहणार्थे 'पर्वणि नाध्येयं' इति निषेधः। वि. १२।३।७. * अध्यापनविधिप्रयुक्तेन अध्ययनेन प्रयुक्तं धर्मविचार-शास्त्रं इति प्राभाकराः। साक्षात् अध्ययनविधिप्रयुक्तमेव-वत् इति भाट्टाः। १।१।१. * अध्यापनादि अपि मिथ्या-चारस्य नियतैश्यमतिप्रसङ्गित्वात् संदिग्धम्। सर्वे च दुष्टद्वेषु संभाव्यमानत्वात् अनिश्चितम्। वा. १।३।१।२ पृ. १०८.

* अध्याये दशमे बाध उच्यते। 'निवृत्त्यादि-प्रकृष्टो दशमे बाध उच्यते।' वि. दशमाध्यायप्रस्तावना-याम्. * अध्यायनामानि अध्यायार्थप्रतिपादकानि– 'प्रमाण–भेद–शेषत्व–प्रयुक्ति–क्रमसंज्ञकाः। अधिकारो, ऽतिदेशश्च सामान्येन, विशेषतः। ऊहो, बाधश्च, तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्॥' वि. प्रस्तावनायां श्लो. ११–१२. ■ अध्यायादिसंबन्धो हि अर्थद्वारः, न ग्रन्थस्वरूपाश्रयः। वा. ३।१।१।१ पृ. ६४९.

अध्यारोपापवादन्यायः। विवेकिनां बुद्धिं आत्मनि अवतारयितुं विशेषणविशेष्यादिप्रबन्धकल्पना यथाप्रतीति सत्तामादाय क्रियते अध्यारोपापवादन्यायेन। उपदेशसाहस्री पद्यं. रामतीर्थः १८।१९५. * अध्या-रोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चितम्। ननु ब्रह्मणो निर्वि-शेषत्वात् आनन्दप्रकाशकत्वं अनुपपन्नं, अध्यारोपा० प्रप-ञ्चितं इति पूर्वाचार्योक्तन्यायमनुसृत्य प्रपञ्चस्य व्यवहार-मानसत्यत्वाङ्गीकारात् इति चेन्न। श्रीकरः १।१।१५ ब्रसू. * अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते इति न्यायः। वस्तुन्यवस्त्वारोपोऽध्यारोपः। यथा–असर्पभूतायां रज्जौ सर्पारोपः, अरजतभूतायां शुक्तौ रजतारोपश्चेति वेदान्तिनः। अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविव-र्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वमिति। ताभ्या-मध्यारोपापवादाभ्यां निष्प्रपञ्चं सच्चिदानन्दानन्ताद्वयं ब्रह्म प्रपञ्च्यते, निस्तार्यते इति भावः। साहस्री. ४७. * अध्यारोपापवादाभ्यां० इति न्यायेन आद्यं पदचतुष्टयं

स्यात् न संशयः । अध्यूध्नी इडाभक्षविकारः स्यात् इतरस्य इडाभक्षस्य विकारः बाधः स्यात् । अध्यूध्नीभिन्ना इडा होतुर्नास्तीत्यर्थः । व्यङ्गवत् । यथा अनिज्याशेषैः त्रिभिरङ्गैः इज्याशेषाणि अङ्गानि बाध्यन्ते तद्वत् । अध्यूध्नी नाम शिश्नरूपो भाग इति केचित् । ऊधसः उपरि वर्तमानाः स्तनभागरूपा इत्यन्ये । यद्यपि पुंस्पशो ऊधसः स्तनस्यापि चाभावः तथापि तत्स्थानीये मांसपिण्डे तात्पर्यम् ।

**शेषे वा समवैति, तस्माद्धयवन्नियमः स्यात् ॥१३॥**

वाशब्दः पक्षं व्यावर्तयति । अध्यूध्नी न इडाभक्षविकारः । सा शेषे समवैति 'अनस्थिभिरिडां वर्धयन्ति' इति तस्याः इडाया हरणं प्राप्तम् । तस्मात् होतुर्भागे तस्या नियमः स्यात् होत्रे एव हरन्ति नान्यस्मै, होत्रे अन्य भक्षं तु कुर्वन्त्येव इति । रथवत् । यथा, 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति रथस्य अध्वर्युभागे नियमः तद्वत् । इति पूर्वः पक्षः ।

**अशास्त्रत्वात्तु नैवं स्यात् । १४ ॥**

तुशब्दः नियमपूर्वपक्षव्यावृत्त्यर्थः । एवं न स्यात् अध्यूध्न्याः होतृभागे नियमो न स्यात् । अशास्त्रत्वात् तादृशस्य शास्त्रस्य अभावात् । अध्यूध्नी इडायामप्राप्ता 'अथ यदन्यत् परिशिष्यते तत्समवत्तधान्यामानयति, यद् हृदयं मांसानि, जिह्वा, वक्षः, स्तनिम, वनिष्ठुं' इत्यत्र अध्यूध्न्याः कीर्तनाभावात् । तस्मात् सा होतृहरणमुद्दिश्य विधीयते अध्यूध्नीमेव होत्रे हरन्ति नान्यत् इति । ततश्च इडाभक्षविकारः इति सिद्धान्तः ।

**अपि वा दानमात्रं स्याद्, भक्षशब्दानभिसंयोगात् । १५ ॥**

अपि वा इति सिद्धान्तस्य व्यावृत्तिः । अध्यूध्नी न इडाभक्षविकारः किन्तु तस्याः होत्रे दानमात्रं स्यात् । भक्षशब्दानभिसंयोगात् । भक्षशब्देन भक्षेण तस्याः अभिसंयोगस्य सम्बन्धस्य अभावात् । सा हि अपूर्वा विधीयते न भक्षार्था । भक्षशब्दानभिसंयोगात् भक्षशब्दाभिसंयोगस्य अभावात् । तस्मान्न भक्षविकारः, नापि नियमः इति तदभिप्रायः ।

**दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् । १६ ॥**

तुशब्दः दानशङ्काव्यावृत्त्यर्थः । अध्यूध्न्याः न दानम् । दातुः अविद्यमानत्वात् । यजमानेन आदावेव अग्नीषोमीया पशुः सङ्कल्पितः । ततश्च शेषं प्रति यजमानस्य होतुश्च अविशिष्टत्वम् । यथा होता न प्रभुः तथा यजमानोऽपि । अप्रभुत्वमिदानीं अविशिष्टम् । शेषं प्रति अविशिष्टत्वात् दातुः अविद्यमानत्वं, तस्मात् अध्यूध्नी होतुः इडाभक्षविकारः स्यात् । होत्रे अध्यूध्नी एव, नान्यत् इडागतं किञ्चित् । इति सिद्धान्तः । के.

ॐ अध्यूध्नीन्यायः । अग्नीषोमीये पशौ अध्यूध्न्या होतुः कृत्स्नेडाभक्षस्य निवृत्तिः ॥

**अध्यूध्नी तु होतुस्त्वन्यदिडाभक्षविकारः स्यात् । १०।७।४।१२ ॥**

भाष्यं— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदमाम्नायते 'अध्यूध्नीं होत्रे हरन्ति' इति । तत्रायमर्थः सांशयिकः किमध्यूध्नी होतृभक्षस्य विकारः उताविकारः, होतुर्नियम्यते इति । कथं विकारः स्यात्, कथं नियम्यते इति ? यदि अध्यूध्नी विधीयते 'होत्रे हरन्ति' इत्येतदनूद्य, ततो विकारः । अथ अध्यूध्नीमुद्दिश्य होत्रे हरन्ति इति विधीयते, ततो नियमः । किं प्राप्तं ? होतुः भक्षस्य विकारः स्यात् । कुतः ? अपूर्वा अध्यूध्नी अदैवतशेषत्वात् इडाभक्षे न प्राप्ता, सा न शक्याऽनुवदितुम् । अतो विधीयते होतृभागहरणे । अध्यूध्नी भवन्ती होतृहरणे प्रत्यक्षा आनुमानिकमिडाभक्षं निवर्तयतीति । व्यङ्गवत् । यथा अनिज्याशेषैस्त्र्यङ्गैः इज्याशेषाणि निवर्त्यन्ते तद्वत् ।

**शेषे वा समवैति, तस्माद्धयवन्नियमः स्यात् । १३ ॥**

भाष्यं— वाशब्दः पक्षं व्यावर्तयति, इडाभक्षविकार इति । कथं स्यादिडाभक्षविकारः, यद्यपूर्वा अध्यूध्नी स्यात् । सा हीडायां समवैति । कथं ? 'अनस्थिभिरिडां वर्धयन्ति' इति तस्या हरणं प्राप्तं, होतुर्नियमो न प्राप्तः, स विधीयते, 'यामिमां अध्यूध्नीं हरन्ति,

प्राप्तं हरणमनूद्य तदाश्रितं होतृसप्रदानकत्वमेव वा तदुद्देशेन विधीयते। एतावच्च पक्षद्वयेऽपि अविशिष्टम्। परंतु 'अनस्थिमिरिडा वर्धयन्ति' इति वचनात् अनस्थिरूपायाः शिश्नाख्यायाः अध्यूध्न्याः इडाया प्राप्तत्वात् तत्र होतृसप्रदानकहरणस्यापि पक्षे प्राप्तत्वेन तन्नियमविधिप्रतीतेः होतुरेव अध्यूध्नी इत्यर्थोत्तमेऽपि न तस्य मासान्तरनिवृत्तिः। इति प्राप्ते, 'अथ यत्तत् परिशिष्टं तत्तत् समवत्तधान्यामारपति। यद् हृदयं प्राश्यति, जिह्वा, वक्षः, स्त्रनिम, तस्यै वनिष्ठु' इति वचनेन हृदयादीनामेव इडाया प्राशनविधानात्, तदभिप्रायेणैव च अनस्थिभिः इत्यस्य वर्तमानापदेशस्य अनुवादत्वोपपत्तेः अध्यूध्न्याः इडायामप्राप्तत्वेन तस्या होतृनियमायोगात्, प्राकृतहोतृहरणमेव उपस्थितत्वात् अप्राकृतसम्बन्ध्यर्थान्तरसम्बन्धित्वेन विधीयते, प्राकृतहरणाश्रितो होतैव वा तथा विधीयते। ततश्च तद्धरणस्य प्रकृतौ भक्षार्थत्वात् अध्यूध्न्या अपि भक्षसिद्धिः। प्राकृतेडाभक्षणस्य च पूर्ववत् कर्मान्तरेणैव सिद्धेः, न तस्य पुनः होत्रा अनुष्ठानम्। अत एव नात्र होतृसप्रदानकहरणान्तरमेव अध्यूध्नीसत्कारार्थत्वेन विधीयते, प्राकृतेडाभक्षणार्थहरणस्योपस्थितत्वेन कर्मान्तरत्वे प्रमाणाभावात्। अतः सिद्ध कृत्स्नस्य होतुरिडाभागस्य अध्यूध्न्या निवृत्तिः इति। यद्य तु आपस्तम्बसूत्रवृत्तरीत्या हृदयादीनामात्मना पण्णा प्रदेयानामेव इडात्व संस्कारार्थं च 'अनस्थिमिरिडा वर्धयन्ति' इत्यनेन अनस्थिरूपस्य वर्धनं विधीयते, तथापि च दृष्टविधया भक्षोपनिरुत्वात् भक्षार्थत्वमेव, तथापि 'क्लोमानं प्लीहानं पुरीतत' इत्यभिमवाक्यशेषेण अवयवमयस्यैव अनस्थिपदेन ग्रहणात् अध्यूध्न्याः प्राप्त्यभावेन पूर्ववत् अपूर्वायाः एव हरणसम्पात् प्राकृतेडाभक्षनिवारत्वसिद्धिः। धूर्तस्वाम्यादीनां तु वाक्यशेषस्य उपलक्षणत्वमङ्गीकृत्य अध्यूध्न्याः अनस्थित्वेन इडावर्धकत्वात् प्राप्तया तस्या होतृनियमप्रात्यङ्गीकारेण इडाभक्षबाधस्याभिधान, उपलक्षणत्वे प्रमाणाभावादुपेक्षितम्।

न्यायबिन्दुः— पशौ 'अध्यूध्नी होत्रे हरति' इति श्रुतम्। तत्र 'अप्राप्तस्थिमिरिडा वर्धयन्ति' इति वचनात् इडान्तर्गता अध्यूध्नी नाम ऊधस उपरि स्तनभागरूपा होतृभागे नियम्यते इति नेडाभक्षबाधिका। इति प्राप्ते, 'अनस्थिभिः' इत्यस्य 'हृदयं प्राश्यति जिह्वां वक्षः' इत्यादिवचनोक्तानुवादात्, तत्र च अध्यूध्नीकीर्तनाभावात्, 'यत् होत्रे हरति, तत् अध्यूध्नीं' इति अपूर्वविधानात्, इडाभक्षबाधिकैव इति सिद्धान्तः।

मण्डन —'अध्यूध्निका होतृभक्षेर्विकारः।' भक्षभागस्य।

शंकर— 'अध्यूध्न्येडाभक्षबाधः।'

* अध्येतृस्मरणान्मन्त्रत्वम्। 'न चास्य (वायुर्वै क्षेपिष्ठा इत्यस्य मन्त्रत्व) तद्रूपेणाप्रतीतेः, अध्येतृस्मरणाभावाच्च।' वा. ३।४।१।१ पृ. ३२१.

* अध्रिगुप्रैषः। मन्त्रः-(आश्वश्रौ ३।३।१)"दैव्याः शमितार आरभध्वमुत मनुष्याः, उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्। प्रास्मा अग्निं भरत, स्तृणीत बर्हिः, अन्वेन माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः। उदीचीनात् अस्य पदो निधत्तात्, सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतात्, अन्तरिक्षमसुं, दिशः श्रोत्रं, पृथिवीं शरीरम्। एकधाऽस्य त्वचमाच्छयतात्, पुरा नाभ्या अपि शसो वपामुत्खिदतात्, अन्तरेवोष्माण वारयध्वात् (वारयतात्-तैत्रा.), श्येनमस्य वक्षः कृणुतात्, प्रशसा बाहू, शला दोषणी, कश्यपेवांसा, अच्छिद्रे श्रोणी, कवषोरू, स्रेकपर्णाऽष्ठीवन्ता, षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद् गात्रंगात्रमस्यानूनं कृणुतात्। ऊवध्यगोहं पार्थिवं खनतात्। अस्ना रक्षः संसृजतात्। वनिष्ठुमस्य मा राविष्टोरूक मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितारः। अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगाऽऽऽउ अपाप" इति। अत्र मन्त्रे पशौ यानि अङ्गानि कीदृशानि छित्वा ग्राह्याणि इति सर्वं होता शमित्रे आह।

के.। 'लिङ्गात् शमितृधर्माननमपगच्छामः। तथारूपाणि हि अत्र वाक्यानि 'दैव्याः शमितार उत मनुष्याः आरभध्वम्' इति। तथा षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयतात्' इति। भा. ९।४।१।१०,

* अध्रिगु. अङ्गानां (पशो.) उद्धरणार्थः। अङ्गानां

* 'कश्यपेवांसा' इति। पशुबहुत्वेऽपि कश्यपाशब्दे नोहः, तस्य कार्त्स्न्यंसपादनपरत्वात्। अंसा=असौ। कश्यपा इव कच्छपाविव इति माधवः। १।४।६, * कवषोरू इत्यत्र पशुबहुत्वेऽपि कवषाशब्दे नोहः तस्य कार्त्स्न्यपरत्वात्। ऊरू कवषा कपाटसदृशौ इति भट्टभास्करः। गतिसाधनाश्वादियानसदृशौ इति भाट्टदीपिका। खट्वासदृशौ इत्यन्ये। के. १।४।५।२५-२७, * 'श्येनपर्णाऽष्ठीवन्ता'। पशुबहुत्वेऽपि श्येनपर्णशब्दे नोहः, तस्य कार्त्स्न्यसंपादनपरत्वात्। अष्ठीवन्तौ ऊर्वो पूर्वभागौ। श्येनपर्णा–करवीरपत्रसदृशौ। शुकपक्षसदृशौ इति भट्टभास्करः। अष्ठीवन्तौ अस्थिसयुक्तौ इति भाट्टदीपिका। १।४।५।२९-२७ * अश्वमेधे 'षड्विंशतिरस्य वङ्क्रयः' इत्यस्य स्थाने अश्वार्थे 'चतुस्त्रिंशद्वाजिनो देवबन्धो' (ऋसं. १।१६२।१८) इति ऋचं पठित्वा, तूपरगोमृगयोरर्थे 'द्विपञ्चाशदनयोर्वङ्क्रयः' इति पठितव्यम्। किंवा 'षडशीतिरेषां वङ्क्रयः' इति समस्य वचन कर्तव्यम्। भा. ९।४।१।१७-२१, * 'षड्विंशतिरस्य वङ्क्रय. ता अनुष्ठयोच्च्यावयतात्' इत्यत्र 'द्विपञ्चाशदनयोर्वङ्क्रय., अष्टसप्ततिरेषां वङ्क्रयः' इत्येवं पशुसंख्यानुसारेण मुख्याना वङ्क्रीणा सख्याकथनार्थं द्विपशुबहुपशुयागेषु यथायथ समस्य वचन कर्तव्यम्।९।४।१।१-१६, * 'घनिष्ठुमस्य मा राविष्ट उरूक मन्यमाना' इति। अत्र उरूकशब्दस्य यथा स्यर्थ.। तथा च अनेकयागेषु लिङ्गनिषु एकवचनान्तोरूकशब्दः द्विबहुवचनान्तेन यथायथ ऊहनीय.। तत्र द्वित्वे 'उरूणी वै मन्यमाना.' इति पदभेदपक्षे 'उरूके मन्यमानाः' इति पदैक्यपक्षे वक्तव्यम्। बहुत्वे च 'उरूणि यानि मन्यमानाः' इति वा 'उरूकाणि मन्यमानाः' इति वा वक्तव्यम्। ९।४।३।२२

ॐ अग्निगुप्रैपगतस्य प्रास्मै इति पदस्य अग्नीषोमीयसवनीययो. समानविधित्वपक्षे न विकार•॥

अग्निगौ सवनीयेषु तद्वत्, समानविधानाश्चेत्। ९।३।८।२३॥

भाष्य— अस्ति सोमे पशुरग्नीषोमीय. 'यो दीक्षितो यदग्नीषोमीय पशुमालभते' इति। तत्र अग्निगौ इद समाम्नायते 'प्रास्मा अग्निं भरत, स्तृणीत बर्हिः अन्वेन माता मन्यतामनु पिताऽनु भ्राता' इत्येवमादि। यदा तु अग्नीषोमीय. सवनीयाश्च समानविधानाः, तत्रेद विचार्यते किमध्रिगौ 'प्रास्मै' इत्येवमादि पद ऊहितव्य, उत नेति। किं प्राप्त? ततोऽतिदेशः क्रियते। अग्निगौ तद्वत् इति। तत्र यः पत्न्यधिकरणे (९।३।७) पूर्वपक्षः स इह पूर्वपक्षः। य. सिद्धान्त स इह सिद्धान्तः। ऊहः इति पूर्वपक्षः। अविकार इति सिद्धान्त.।

शा — तृतीयेऽध्याये सवनीयपशवः समानविधानाः इति पूर्वपक्षे (३।६।१६।४१-४७) समानविधानत्व यदुक्त, तस्येद प्रयोजन पूर्वाधिकरणेन सिद्ध अनेन सूत्रेण कथ्यते। यदा समानविधानाः, तदा उक्थ्यषोडश्यादिद्विबहुपशुकेऽपि सवनीयगणे प्रवर्तमानः प्रास्मै इत्यग्निगुप्रैषगतैकवचनान्तः शब्दः पत्नीशब्दवदेव नोहितव्य, विकारपक्षे तु ऊहितव्य.।

वि— 'अग्नीषोमीयसवनश्चास्तुल्यविधयो यदि। प्रास्मा इति तदा मन्त्रो पत्नीन्यायेन नोहनम्॥' परमार्थतस्तु सवनीयपशूना अग्नीषोमीयविकृतित्वात् असत्येव लिङ्गवचनयो. पाशन्यायेन ऊहः।

भाट्ट— एव क्रतुपशूना समानविधानत्वपूर्वपक्षे 'प्रास्मै' इत्यग्निगुप्रैषे एकवचनान्त एव तेषु प्रयोक्तव्यः पत्नीशब्दवत्। न तु एकवचनानुरोधेन एकपशुत्वं एव देशादौ। एकवचनस्य प्रत्येकव्यक्त्यभिप्रायेण गणेऽपि श्रुत्यैव समवात्। अत एव यस्य पुलिङ्गस्य श्रुत्या स्त्रीपशुगणे असमर्थ., तत्र अत्यन्तनिषिद्धलक्षणाया प्रमाणाभावात् मैत्रीवरुणे पुपशुष्वेव सवेऽन्व इति वैषम्यम्। असमानविधानसिद्धान्ते तु प्रास्मै इत्यत्र वचने लिङ्गे च 'प्रैभ्यो अस्मा अग्निं भरत' इत्येवमूहितव्य एव। तदेतत् तार्तीयस्य समानविधानविचारस्य प्रयोजनमात्रकथनम्।

न्यायबिन्दु — संख्याधिकरणा समानविध्यपूर्वपक्षे द्विबहुपशुके सवनीयगणे 'प्रास्मै' इत्यग्निगुप्रैषगतमेव वचन पत्नीशब्दवदेव नोहितव्य इति प्रयोजन, सिद्धान्ते तु ऊहः इति प्रपञ्चादुक्तम्। प्रास्मै इति पुलिङ्ग तु अत्यन्तानुवादे न प्रावर्त्यया प्रवर्तते इति वैषम्यम्।

